THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 159.

# योगदर्शनम् ।

परमहंसपरिव्राजकाचार्य-नारायणतीर्थ-निर्मिताभ्यां
योगसिद्धान्तचन्द्रिका-सूत्रार्थबोधिनी-
समाख्यव्याख्याभ्यां संवलितम् ।
श्रीमदाचार्य श्रीवल्लभाधीश्वरसंप्रदायविदुषा
रत्नगोपालभट्टेन संशोधितम् ।

YOGADARŚANA

WITH A COMMENTARY CALLED
YOGASIDHANTA CHANDRIKA
by
SWAMI NARAYANATIRTHA.
AND SUTRARTHA BODHINI BY THE SAME AUTHOR.

EDITED BY
Pandita Ratna Gopāla Bhatta.

FASCICULUS II.

PUBLISHED AND SOLD BY THE SECRETARY.
CHOWKHAMBÂ SANSKRIT BOOK DEPÔT
BENARES
AGENTS - OTTO HARRASSOWITZ LEIPZIG
PANDITA JYESHTHARÂMA MUKUNDAJI BOMBAY
PROBSTHAIN & CO BOOKSELLERS LONDON
Printed by Hari Krishna Dâsa Gupta
PROPRIETOR AT THE VIDYÂ VILÂSA PRESS
BENARES

Price Rupee One.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः— १५९

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्म-शास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकै-र्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तवकम् ,, ,, १ ,, ०

६ प्रापणव्ययः पृथग् नास्ति ।

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाष्यभाषा प्रकाशसहितम् । सं० (वेदान्त) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः (मीमांसा) २

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS,

NOS. 154 & 159.

---

# योगदर्शनम् ।

परमहंसपरिव्राजकाचार्य-नारायणतीर्थ-निर्मिताभ्यां
योगसिद्धान्तचन्द्रिका-सूत्रार्थबोधिनी-
समाख्यव्याख्याभ्यां संवलितम् ॥
श्रीमदाचार्य श्रीवल्लभाधीश्वरसंप्रदायविदुपा
रत्नगोपालभट्टेन संशोधितम् ।

## YOGADARSANA

WITH A COMMENTARY CALLED
YOGASIDHÂNTA CHANDRIKÂ
by
SWÂMI NÂRAYANATIRTHA.
AND SUTRARTHA BODHINI BY THE SAME AUTHOR.
EDITED BY
Pandita Ratna Gopâla Bhatta

---


*PUBLISHED AND SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT BOOK DEPOT
BENARES
AGENTS - OTTO HARRASSOWITZ, LEIPZIG
PANDITA JYESHTHÂRÂMA MUKUNDAJI BOMBAY:
PROBSTHAIN & CO BOOKSELLERS LONDON
*Printed by Hari Krishna Dâsa Gupta*
PROPRIETOR, AT THE VIDYÂ VILASÂ PRESS
BENARES

1911

श्रीगणेशाय नमः ।

# योगदर्शनम् ।

## श्रीनारायणतीर्थविरचित-
## सूत्रार्थबोधिनीसमाख्य-
## वृत्तिसमेतम् ॥

---

श्रीकृष्णं सच्चिदानन्दं नत्वाऽथ क्रियते मया ॥
योगसूत्रेषु व्याख्यानं सङ्क्षेपेण न विस्तरात् ॥ १ ॥

इह खलु श्रुतिस्मृतीतिहासाद्यखिलवाङ्मयप्रसिद्धधर्मार्थकाममोक्षपुरुषार्थचतुष्टयेषु तावन्मोक्षः परमपुरुषार्थः । स च श्रवणमनननिदिध्यासनसाध्यस्तत्राप्यखिलाधिकृतस्यासाधारणकरणीभूतस्याष्टाङ्गयोगेन प्रायेण कवलीकृतस्यैतन्मताभिमतस्य च यथायथं मोक्षाणिमादिसिद्धये च भगवान् पतञ्जलिः समाधितत्साधनविभूतिकैवल्याख्यपादचतुष्टयात्मकैकाध्यायपरिमितानि सूत्राणि चकार । तेषु च सूत्रेषु भगवान् बादरायणो भाष्यं चकार । तदुपरि च सर्वतन्त्रस्वतन्त्रा वाचस्पतिमिश्राष्टीकां चक्रुः । तत्र भाष्ये तट्टीकायां चातिगम्भीरत्वान्न सहसा सूत्रार्थ ईषद्व्युत्पन्नैर्मुमुक्षुभिरन्यैर्वा सूत्रार्थजिज्ञासुभिर्लब्धुं शक्यते । तथाच तदनुग्रहाय तानेवाश्रित्य सूत्रार्थबोधिनी वृत्तिरारभ्यते । तत्रेदमाद्यं सूत्रम्—

अथ योगानुशासनम् ॥ १ ॥

अथ–शब्द आरम्भार्थः । श्रुतिमात्रेण मङ्गलप्रयोजकश्च । शास्यतेऽनेनेति शासनं शास्त्रं, योगानामनुशासनं योगानुशासनम् । तथाच योगशास्त्रमारभ्यत इत्यर्थः ॥ १ ॥

तत्र सम्प्रज्ञातासम्प्रज्ञातभेदेन वक्ष्यमाणेन द्विविधयोगस्य साधारणं लक्षणमाह—

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

चित्तस्य रजस्तमोवृत्तीनां वक्ष्यमाणानां निरोधः प्रातिलोमपरिणामेनोपशमो योग इत्यर्थः। अतो वक्ष्यमाणसम्प्रज्ञातसमाधेः सात्त्विकवृत्तिसत्त्वेऽपि नाव्याप्तिः। तत्र चित्तस्य त्रिगुणात्मकत्वात् क्षिप्तमूढविक्षिप्तैकाग्रनिरुद्धरूपपञ्चभूमयोऽवस्थाविशेषा भवन्ति। तत्र न तिसृणामुपयोगोऽपि तु द्वयोरेवान्त्ययोः। तत्र क्षिप्तं रजस उद्रेकादस्थिरं बहिर्मुखतया सुखदुःखादिविषयेषु विकल्पितेषु व्यवहितेषु सन्निहितेषु च रजःप्रेरितं भवति। तच्च सदैव दैत्यदानवादीनाम्। मूढं तमस उद्रेकात् कृत्याकृत्यविभागमगणय्य क्रोधादिभिर्विरुद्धकृत्येष्वेव निरतं भवति। तच्च सदैव रक्षःपिशाचादीनाम्। विक्षिप्तं तु सत्त्वोद्रेकाद् रजोविशिष्टं परिहृत्य दुःखसाधनं सुखसाधनेष्वेव शब्दादिषु प्रवृत्तं भवति। तच्च सदैव देवानां, रजसोऽप्यभावेन शुद्धसत्त्वोद्रेकाद् भगवद्भक्तानां देवासुरमनुष्यादीनां सात्त्विकवृत्तिविशिष्टमेकाग्रं भवति। तस्या अपि निरोधे निरुद्धं योगिनामेव भवति। व्यक्तमेतदाकरे ॥ २ ॥

ननु बुद्धिवृत्तिस्वभावस्य पुरुषस्य वृत्तिनिरोधे कथं स्थितिरित्यत आह—

तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

यदा चित्तस्य शान्तघोरमूढानां सर्वासां वृत्तीनां निरोधस्तदा द्रष्टुश्चिदात्मनः स्वाभाविके स्वरूपे स्थितिः, कुसुमापाये यथा स्फटिकस्य तथेत्यर्थः। पुरुषस्य चैतन्यमात्रं स्वभावो, न वृत्तय इति भावः ॥ ३ ॥

नन्नु तर्हि व्युत्थाने स्वभावाच्च्युतिः स्यादित्याशङ्क्याह—

वृत्तिसारूप्यमितरत्र ॥ ४ ॥

इतरत्र निरोधाद् व्युत्थाने सति याश्चित्तवृत्तयः शान्ताद्यास्तत्सारूप्यं वृत्तिमद्बुद्ध्यविवेकेन पुरुषस्य शान्तो दुःखीति वृत्तितादात्म्यभ्रम इत्यर्थः। अतो न स्वभावात् प्रच्युतिः। न हि लौहित्यभ्रमकाले स्फटिकस्य स्वभावाच्च्युतिरस्तीति भावः। निरोधे मुक्तिर्व्युत्थाने बन्ध इति सूत्रद्वयतात्पर्यम् ॥ ४ ॥

इदानीं निरोद्धव्यानां वृत्तीनामियत्तामाह—

वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥

तयप्प्रत्ययोऽवयववाची। वृत्तयोऽग्रिमसूत्रोक्ताः। प्रमाणादयः पञ्च वृत्तिविशेषा वृत्तिसमूहस्यावयविनोऽवयवा इत्यर्थः। पञ्चावयवा यासां ताः पञ्चतय्यः। तासां हानोपादानसिद्ध्ये भेदमाह ॥ क्लिष्टा अक्लिष्टा इति ॥ रागादिक्लेशानां हेतवः। क्लिष्टा बन्धफलाः। सर्वो हि जन्तुः प्रमाणादिवृत्तिभिर्ज्ञातार्थेषु रागादिना कर्म कृत्वा सुखादिना बद्ध्यते। अक्लिष्टा मोक्षफलाः क्लेशनाशिन्य आत्मगोचरा इत्यर्थः ॥ ५ ॥

ता एव पञ्चवृत्तीरुद्दिशति—

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

इतोऽन्या वृत्तिर्नास्तीति उद्देशसूत्रस्य फलम् ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजते—

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

त्रीण्येव प्रमाणानीति भावः। तत्र मानसामान्यलक्षणमविसंवादि ज्ञानम्। तत्रापीन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारण-

प्रधाना वृत्तिः प्रत्यक्षप्रमाणम् । गृहीतसंबन्धाल्लिङ्गाल्लिङ्गिनि सामान्यात्मनाऽध्यवसायोऽनुमानम् । आप्तवचनमागमः ॥ ७ ॥

विपर्ययं लक्षयति—

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

अतद्रूपप्रतिष्ठं तद्रूपे स्वविषये स्वजन्यप्रतिष्ठाशून्यं बाधाविरोधीति यावत् । विकल्पेऽतिव्याप्तिवारणाय मिथ्याज्ञानपदम् ॥८॥

विकल्पं लक्षयति—

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

नरशृङ्गादिश्रवणानन्तरं भवन्ती निर्विषया वृत्तिर्या सा विकल्प इत्यर्थः । वस्तुशून्यत्वान्नायं प्रमाणं, व्यवहारहेतुत्वाच्च न विपर्ययः ॥ ९ ॥

निद्रां लक्षयति—

अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

कार्यं प्रत्याययति जनयतीति प्रत्ययो हेतुः । जाग्रत्स्वप्नवृत्तीनामभावे हेतुस्तम आलम्बनं विषयो यस्याः सा वृत्तिर्निद्रा। अस्याः सुखमहमस्वाप्सं, न किञ्चिदवेदिषमिति सुषुप्त्यनन्तरं जागरे स्मृतिदर्शनात् । स्मृतेश्चानुभवव्यतिरेकेणानुपपत्तेर्वृत्तित्वम् । वृत्तिशब्दोच्चारणं तु ज्ञानसामान्याभावो निद्रेति तार्किकस्वीकृतनिरासार्थं, भाष्यकृद्भिस्तु व्याख्यातम् । सा तु प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेष एव । कथमितिचेदुच्यते । सुखमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति । दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितं, गाढं मूढोऽहमस्वाप्सं गुरूणि मेऽङ्गानि क्लान्तं मे चित्तम् अलं मुषितमिव भवतीति । स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्याद् असति प्रत्यया-

ऽनुभवे, तदाश्रिताः स्मृतयश्च तद्विषया न स्युः। तस्मात् प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्येति । नच भाष्यकारविरोधाद् वृत्तिकारव्याख्यानं विरुद्धमिति शङ्क्यम् । वृत्तिकारस्य प्रसिद्धावस्थात्रयाभिप्रायात् । भाष्यकारस्य तु अवस्थात्रयस्याऽप्येकैकावस्थात्रैविध्याङ्गीकाराभिप्रायत्वान्न विरोधः ॥ १० ॥

स्मृतिं लक्षयति—

अनुभूतविषयाऽसंप्रमोषः स्मृतिः ॥ ११ ॥

असंप्रमोषोऽधिकाग्रहः । अनुभूतग्रह इति यावत् । सा स्मृतिरित्यर्थः । ननु स्वकरे गजवैशिष्ट्यमननुभूतमपि स्वप्ने स्मर्यते इतिचेन्न । तस्य विपर्ययत्वादिति भावः ॥ ११ ॥

आसां वृत्तीनां निरोधोपायमाह—

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

तत्र संसारसागराभिमुख्या विषयभूमिगायाश्चित्तवृत्तेः प्रवाहो वैराग्येण भज्यते । तत्प्रवाहभङ्गे निद्रा स्यात् । तद्भङ्गाय अभ्यासो विहितः। तेन लयविक्षेपप्रवाहो भज्यते । अतो द्वावेवोक्तौ ॥ १२ ॥

अभ्यासस्वरूपमाह—

तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

तत्र तयोर्मध्ये रजस्तमोवृत्तिशून्यस्य चित्तस्य एकाग्रता स्थितिः । तस्यां कार्याणि यमनियमादीनि । तद्विषयकः प्रयत्नोऽनुष्ठानमभ्यास इत्यर्थः ॥ १३ ॥

नन्वनादिप्रबलराजसतामसवृत्तिसंस्कारैर्विरोधिभिःकुण्ठितोऽभ्यासो न स्थितौ कल्पते इत्यत आह—

स तु दीर्घकालनैरन्तर्यसंस्कारसेवितो दृढभूमिः ॥१४॥

तुशब्दः शङ्काव्यावृत्त्यर्थः।सः अभ्यासो दीर्घकालनैरन्तर्येण ब्रह्मचर्यश्रद्धारूपसंस्कारेण च सेवितो दृढभूमिः दृढसंस्कारः। स व्युत्थानसंस्कारैर्नाभिभूयते, किन्तु स्थितिसमर्थो भवतीत्यर्थः॥१४

वैराग्यस्वरूपमाह—

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम्॥१५

दृष्टेषु स्त्र्यन्नपानादिषु एवमनुश्रवो वेदस्तदुक्तेषु आनुश्रविकेषु स्वर्गाणिमादिषु पूर्वोक्ताभ्यासेन साक्षात्काराद्वितृष्णस्योपेक्षाबुद्धिर्वशीकारसंज्ञा वैराग्यमित्यर्थः। तच्च भूमिकाजयक्रमेण लब्धुं शक्यते ॥

तदुक्तम्—

वैराग्यमाद्यं यतमानसंज्ञं
क्वचिद्विरागो व्यतिरेकसंज्ञकः।
एकेन्द्रियाख्यं हृदि रागसौक्ष्म्यं
तस्याप्यभावस्तु वशीकृताख्यम्, इति ॥

तत्र स्वीकृतविषयान् सन्त्यक्तुमशक्नुवतोऽपि समानेच्छात्यागेनाद्यम्। ततोऽपि विषयाणां मध्ये प्रियवस्तुलावण्यादिव्यतिरेकेणाऽपि क्वचिद्द्वितीयम्। तथा वृत्तावपि मनसि रागशैथिल्येन बाह्येन्द्रियैरेव सेवनं तृतीयम्। तत्राप्यौदासीन्यं चतुर्थमित्यर्थः ॥ १५॥

अपरं वैराग्यमुक्त्वा परं वैराग्यमाह—

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

तत्र वशीकारसंज्ञके वैराग्ये जाते सति संप्रज्ञातप्रभावेन पुरुषस्य या ख्यातिः प्रधानाद्विविक्तस्य यः साक्षात्कार उच्यते

तदभ्यासादशेषगुणत्रयव्यवहारेषु वैतृष्ण्यम् । तृष्णाविरोधिनी चित्तवृत्तिर्या भवति तत्परं श्रेष्ठं फलभूतं वैराग्यम् । तत्परिपाकाच्चित्तोपशमपरिपाकस्ततोऽविलम्बेन कैवल्यमित्यर्थः ॥ १६ ॥

इदानीं चतुर्विधं संप्रज्ञातं दर्शयति—

वितर्कविचाराऽऽनन्दाऽस्मितानुगमात् संप्रज्ञातः ॥१७॥

स्थूलसाक्षात्कारो वितर्कः । सूक्ष्मसाक्षात्कारो ध्यानेन स्थूलकारणपञ्चतन्मात्राविषयको विचारः । इन्द्रियाणामस्थूलरूपत्वेऽपि प्रकाशकत्वेन सात्त्विकरूपत्वात्तेषां ध्यानेन साक्षात्कार आनन्दः । तेषां कारणं बुद्धिः । सा ग्रहीत्रैकीभूताऽस्मितेत्युच्यते । तद्विषयकसाक्षात्कारोऽस्मिता । अत्र स्थूलं सूक्ष्मं च ग्राह्यं, ग्राहकाणीन्द्रियाणि, गृहीताऽस्मिता । तेषु ध्यानपरिपाकः संप्रज्ञातो योगः । स चैतैः स्वरूपैरनुगमाच्चतुर्विधः सवितर्क इत्यादिः ॥ १७ ॥

अधुना सोपायमसंप्रज्ञातमाह—

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥

वृत्तीनामभावो विरामः । तस्य प्रत्ययः कारणं वैराग्यं, तदभ्यासः पूर्वं उपायो यस्य स तथा । अनेन पदेन युक्तोऽन्यः असंप्रज्ञातः । परं वैराग्यं संप्रज्ञातशेषानभिभूय स्वसंस्कारं शेषयति स निर्बीजः समाधिः कर्मबीजाभावात् ॥ १८ ॥

अयमसंप्रज्ञातो द्विविधः, भवप्रत्यय उपायप्रत्ययश्च । तत्र मुमुक्षुभिर्हेयं भवप्रत्ययमाह—

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

भूतेन्द्रियाणामन्यतरस्मिन् भावनया देहपातानन्तरं भूतेन्द्रियेषु लीना मांसशोणितलोममेदोऽस्थिमज्जारूपषाट्कौशिकदेह-

शून्या विदेहाः। अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु प्रकृतिरूप-कारणेषु लीनाः प्रकृतिलया जीवाःतेषां चित्तं संस्कारमात्रशेष-मित्यसंप्रज्ञातः। स तु भवप्रत्ययः। भवन्ति जायन्तेऽस्यामिति अनात्मन्यात्मबुद्धिः। स प्रत्ययो हेतुर्यस्य स तथाऽविद्यामूलो-ऽयं योगोऽतो हेयः। अत एवोक्तं वायुपुराणे—

दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः।
भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः॥
बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः॥
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते, इति॥ १९॥

अधुना मुमुक्षूणामुपादेयं द्वितीयमाह—

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्॥ २०॥

पुरुषगोचरा सात्त्विकी श्रद्धा। तया वीर्यं प्रयत्नो जायते तेन यमनियमपरम्परया स्मृतिर्ध्यानम्। तेन समाधिः।तेन प्रज्ञा पुरुषगोचरख्यात्यभ्यासः संप्रज्ञातः। ततः परवैराग्यादसंप्रज्ञातः। इतरेषां पूर्वविलक्षणानां मुमुक्षूणां भवतीत्यर्थः॥ २०॥

तत्र प्रज्ञाता उपाया मृदुमध्याधिमात्रास्त्रिविधाः। तथाच योगिनोऽपि त्रयः। मृदूपायो, मध्योपायोऽधिमात्रोपायश्चेति। तत्र मृदूपायोऽपि त्रिविधः। मृदुवेगो, मध्यवेगस्तीव्रसंवेगश्चेति तत्र तीव्रसंवेगस्य क्षिप्रं समाधिमाह—

तीव्रसंवेगानामासन्नः॥ २१॥

समाधिलाभः। संवेगो वैराग्यम्। अथवा वैराग्यानुकूल-क्रियाहेतुर्दृढतरः संस्कार उत्कटवैराग्यमिति यावत्। येषामुपाया-श्चाधिमात्रास्तेषां योगिनामासन्नः समाधिरसंप्रज्ञातः। ततो मोक्ष इत्यर्थः॥ २१॥

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

तीव्रसंवेगस्यापि मृदुमध्याधिमात्रत्वात्ततो मृदुतीव्रसंवेगस्य योगिन आसन्नात् समाधेर्मध्यतीव्रसंवेगस्यासन्नतरस्ततोऽप्याधिमात्रतीव्रसंवेगस्यासन्नतमः समाधिलाभ इति विशेष इत्यर्थः॥२२॥

इदानीमेतदुपायाद्विलक्षणमुपायान्तरमाह—

ईश्वरप्रणिधानाद्वा ॥ २३ ॥

ईश्वरे कायिकाद्वाचनिकान्मानसात् प्रणिधानाद् भक्तिविशेषादासन्नतमः समाधिलाभः।वाशब्दो भक्तिविकल्पार्थः॥२३॥

ईश्वरस्य स्वरूपमाह—

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥२४॥

क्लिश्यन्तीति क्लेशा अविद्यादयः पञ्च । कर्म धर्माधर्मौ । तयोः फलं विपाकः ।फलानुकूलाः संस्कारा आशयाः। मनस्याशेरत इति व्युत्पत्तेः। तैः क्लेशादिभिः कालत्रयेऽप्यसंबन्धः पुरुष ईश्वरः। विशेषपदेन वस्तुतः कालत्रयासंबन्धजीवेभ्यो व्यावृत्तिः कृता ॥

अत्र भाष्यम् । वक्ष्यमाणा अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः। ते च मनसि वर्तमाना अपि पुरुषे व्यपदिश्यन्ते । स हि तत्फलस्य भोक्तेति । यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते। यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वर इति । कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः । ते हि त्रीणि बन्धनानि छित्वा कैवल्यं प्राप्ताः । ईश्वरस्य च तत्संबन्धो न भूतो न भावी।यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य । यथा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भा-

च्यते। स तु सदैव मुक्तः सदैवेश्वर इति। योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्तः, आहोस्विन्निर्निमित्त इति ॥ तस्य शास्त्रं निमित्तम् ॥ शास्त्रं पुनः किन्निमित्तम्। प्रकृष्टसत्त्वनिमित्तम्॥एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिसम्बन्धः। तस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त इति। तच्चैतस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्। न तावदैश्वर्यान्तरेण तदतिशय्यते। यदेवातिशयितं तस्मादेव तत् स्यात्। तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः। न च तत्समानमैश्वर्यमस्ति। कस्मात् सः। तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्विति एकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति। अर्थस्य विरुद्धत्वात्। तस्माद्यस्य साम्यातिशयविनिर्मुक्तमैश्वर्यं स ईश्वरः। स च पुरुषविशेष इति ॥२४॥

तस्य सर्वज्ञत्वेऽनुमानमाह—

तत्र निरतिशय सर्वज्ञबीजम् ॥ २५ ॥

तत्र ईश्वरे निरतिशयं सर्वज्ञत्वबीजं ज्ञापकमित्यर्थः। तथाचायं प्रयोगः। अस्मदादीना ज्ञानं निरतिशयज्ञानेनाऽविनाभूतं, सातिशयत्वाद्, यत् सातिशय तत् समानजातीयेन निरतिशयेन युक्तम्। यथा कुम्भपरिमाणं विभुपरिमाणेन। तथाच निरतिशयं ज्ञानं सर्वज्ञत्वमन्तरा नोपपद्यते इति सिद्धं सर्वज्ञत्वम्। तस्य जीवे बाधादितरस्मिन् कल्पना स्यात्। तदपेक्षया श्रुतिसिद्धानां शिवनारायणादीनामुपाधिभेदेन भिन्नत्वेनावगम्यमानाना कल्पनं साधीय इति दिक् ॥ २५ ॥

तस्य भगवतो ब्रह्मादिभ्यो भेदमाह—

स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥

स ईश्वरः पूर्वेषां सर्गादावुत्पन्नानां हिरण्यगर्भादीनां कालपरिच्छिन्नानां गुरुर्धर्मार्थकाममोक्षोपदेष्टा । कालेनानवच्छेदात् । अनाद्यनन्तत्वादित्यर्थः ॥ २६ ॥

इदानीं परमेश्वरं निरूप्य तत्प्रणिधानं वक्तुं रहस्यमाह—

तस्य वाचकः प्रणवः ॥ २७ ॥

तस्येश्वरस्य । प्रणव ओङ्कारः ॥ २७ ॥

एवं वाचकमुक्त्वा प्रणिधानमाह—

तज्जपस्तदर्थभावनम् ॥ २८ ॥

तस्य प्रणवस्य जपः प्रणवाभिधेयस्येश्वरस्य भावनम् । एवं प्रणवं जपतस्तदर्थं च भावयतश्चित्तमेकाग्रं भवति ॥ २८ ॥

समाधिलाभरूपफलमुक्त्वा फलान्तरमपि तदनुगुणमाह—

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

प्रतीपं विपरीतमञ्चति जानातीति प्रत्यग् भ्रान्त इत्यर्थः । अनेनेश्वराद्भेद उक्तः । प्रत्यक् चासौ चेतनश्च तस्याधिगमः साक्षात्कारस्ततः प्रणिधानाद्भवति । अपिचान्तरायाणामभावो भवति ॥ २९ ॥

अन्तरायानाह—

व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनाऽलब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥

ये चित्तं योगाद्विक्षिपन्ति ते विक्षेपा योगस्यान्तराया विघ्ना एव । तत्र वातादीनामिन्द्रियाणां च वैषम्यं व्याधिः । स्त्यानं

चित्तलघुत्वेऽपि कर्मानर्हता। संशयः सिद्ध्यति न वेति। प्रमादो योगाङ्गानामननुष्ठानलक्षणः। आलस्यं चित्तस्य गुरुत्वादप्रवृत्तिः। अविरतिर्विषयतृष्णा। भ्रान्तिदर्शनम् एककोटिविपर्ययः। अलब्धभूमिकत्वं समाधिभूम्यलाभः। मधुमत्यादयः समाधिभूमयो वक्ष्यन्ते। अनवस्थितत्वं नाम लब्धायां भूमौ चित्तस्याऽस्थिरत्वम्। पूर्वभूमौ स्थिरं हि चित्तम् उत्तरभूमिं जयेत्। तस्मादस्थिरत्वं दोषः॥ ३०॥

न केवलमेते योगनाशकाः, किन्तु दुःखादीनपि कुर्वन्तीत्याह—

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः॥ ३१॥

दुःखं शारीरं कामजं मानसं व्याघ्रादिजमाधिभौतिकम्। ग्रहपीडादिजमाधिदैविकम्। दौर्मनस्यमिच्छाविघातात्। क्षोभो मनसि। अङ्गमेजयतो भावोऽङ्गमेजयत्वम्। अङ्गानां कम्प इत्यर्थः। अनिष्कृतः प्राणो यद् बाह्यं वायुमन्तः प्रवेशयति स श्वासः। समाध्यङ्गरेचकविरोधीत्यर्थः। एवमनिच्छतः कोष्ठस्थस्य वायोर्बहिर्गमनं प्रश्वासः पूरकविरोधात्। एतैर्विक्षेपैः सह भवन्तीत्यर्थः॥ ३१॥

ईश्वरप्रणिधानादेतेषामभाव इत्युक्तमुपसहरति—

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः॥ ३२॥

विक्षेपाणां नाशार्थमेकतत्त्वाभ्यासोऽभिमतध्यानं कार्यमित्यर्थः॥ ३२॥

तस्य चित्तस्यासूयादिमलवतो योगासम्भवात्तन्मलनिरासोपायमाह—

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां

भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

मैत्री सुखिषु मित्रता । दुःखिषु करुणा दया । पुण्यवृत्तिषु हर्षो मुदितम् । अपुण्यशब्दितपापादिके उपेक्षां भावयेत् । तया वृत्त्या चित्तस्य प्रसादनं भवति । सुखादिषु यथाक्रममुक्तभावनया सात्त्विको धर्मो जायते । तेन च शुक्लेन धर्मेण चित्तं प्रसन्नं भवति । प्रसन्ने च स्थितिपदं लभते ॥ ३३ ॥

एवं मैत्र्यादिभावनया प्रसन्नस्य चित्तस्य स्थित्युपायानाह—

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

नासिकापुटाभ्यां प्राणस्य प्रच्छर्दनं रेचनम् । रेचितस्य प्राणस्य बहिरेव विधारणं कुम्भकम् । यथाशक्ति ताभ्यामेकत्र लक्ष्ये चित्तं स्थितिं लभते । प्राणजये चित्तजयस्तयोरविभागात् प्राणायामस्य सर्वपापनाशकत्वात् पापनिवृत्तौ चित्तं स्थिरं भवति । वाशब्दो वक्ष्यमाणोपायविकल्पार्थः ॥ ३४ ॥

उपायान्तरमाह—

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः
स्थितिनिबन्धनी ॥ ३५ ॥

नासाग्रे चित्तस्य संयमाद्दिव्यगन्धसाक्षात्कारो भवति । एवं रसनादावपि ज्ञेयम् । ताः संविदो विषयवत्यः प्रवृत्तयः शीघ्रमुत्पन्नाः सत्यो विश्वासमुत्पाद्येश्वराद्यतिसूक्ष्मे लक्ष्ये मनसः स्थितिं निबध्नन्तीत्यर्थः । तथाच शास्त्रीयानुभवविशेषे जाते श्रद्धया योगी यः कोऽपि प्रवर्त्तेत इति भावः ॥ ३५ ॥

विशोका वा ज्योतिष्मती ॥ ३६ ॥

अष्टदलध्यानादिक्रमेण मनसः संयमाज्ज्योतिःस्वरूपात्म-

विषया ज्योतिष्मती विशोका दुःखरहिता संविदुत्पद्यते सा मनसः स्थितिहेतुरित्यर्थः ॥ ३६ ॥

वीतरागविषयं वा चित्तम् ॥ ३७ ॥

वीतरागं यच्चित्तं परित्यक्तविषयाभिलाषमित्यर्थः। तद्विषयं तत्र धार्यमाणं योगिनश्चित्तं स्थितिपदं प्राप्नोतीत्यर्थः ॥३७॥

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

अत्र ज्ञानशब्दो ज्ञेयपरः॥ स्वप्ने भगवतो यद्रूपं भगवतोऽत्यन्तप्रियमाराधयन्नेव प्रबुद्धस्तत्रैव चित्तं धारयेत्। निद्रायां तु सुप्तौ यत् सुखं तत्र धारयेत्। एवं स्वप्ननिद्रान्ते सालम्बनं चित्तं स्थितिं प्राप्नोतीत्यर्थः ॥ ३८ ॥

यथाभिमतध्यानाद्वा ॥ ३९ ॥

किं बहुना, कृष्णादिरूपं यदेवेष्टं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि लभते ॥ ३९ ॥

चित्तस्थितिजयस्य ज्ञापकमाह—

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

अस्य सूक्ष्मे निविशमानस्य वशीकारोऽप्रतिघातः। स एव ज्ञापकमित्यर्थः ॥ ४० ॥

सम्प्रज्ञातयोगस्य विषयं स्वरूपं च निर्दिशति—

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥

अत्र पाठक्रमादर्थक्रमो बलीयान्। तथाचाभ्यासवैराग्याभ्यां क्षीणरजस्तमोवृत्तिकस्य ग्राह्यग्रहणग्रहीतृषु तत्स्थस्य तदुपरक्तस्य तदञ्जनता स्वरूपत्यागेन तत्तद्रूपता तस्याः सम्यगापत्तिःसम्प्रज्ञात इत्यर्थः। स च वितर्कादिविषयभेदाच्चतुर्विधः। तत्र दृष्टान्तमाह॥

अभिजातस्य स्वच्छस्य मणेर्जपाकुसुमाद्युपरक्तस्य स्वरूपाभिभवेन रक्ताद्याकारता यथा भवति तथेत्यर्थः ॥ ४१ ॥

सोऽपि संप्रज्ञातः सवितर्कनिर्वितर्कसविचारनिर्विचारभेदैश्चतुर्धा । तत्र सवितर्कायाः स्वरूपमाह—

तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का ॥ ४२ ॥

तत्र तासु मध्ये सवितर्का समापत्तिरेषा ज्ञेया । तथाहि । गौरित्युक्ते शब्दार्थज्ञानानि त्रीण्यभिन्नानि । तत्र गौरित्येको विकल्पः । अयं हि गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविषयकः । तथा समाधिप्रज्ञा शब्दार्थज्ञानविकल्पैः सङ्कीर्णा तैस्तुल्या भवति । विकल्पत्वाविशेषात् ॥ ४२ ॥

निर्वितर्कामाह—

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

गवादिशब्दानां सङ्केतो विकल्पितेष्वेव लोके गृह्यते । तस्य स्मृत्या शाब्दज्ञानं परार्थानुमितिश्च विकल्प एव जायते । तत्र स्मृतिपरिशुद्धौ सत्याम् अर्थमात्रतात्पर्यवता चित्तेनार्थमात्राऽवभासात् । सङ्केतस्मृतेस्त्यागे सति सविकल्पत्यागादर्थमात्रमविकल्पितार्थरूपं यद्ग्राह्यं तत्स्वरूपेणैव निर्भासमाना निर्वितर्का समापत्तिरित्यर्थः ॥ ४३ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥

विशिष्टेषु स्ववाचकशब्दज्ञानाभ्यासभेदेन विकल्पितेषु गा समापत्तिः सा सविचारेत्युच्यते । तेष्वेव विशेषणशून्येषु अर्थमात्रेषु या समापत्तिः सा निर्विचारेति भावः ॥ ४४ ॥

ननु किमस्या ग्राह्यसमापत्तेः परमाणुष्वेवावसानम्? नेत्याह—

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

अस्याः समापत्तेः सूक्ष्मविषयत्वम् अलिङ्गे प्रधाने पर्यवस्यति। प्रधानं विलयं न गच्छतीत्यलिङ्गमुच्यते। पुरुषस्य सत्त्वेऽपि अनुपादानत्वात् प्रधानपर्यन्तमेव समापत्तिरिति सिद्धम् ॥४५॥

एवं स्थूले सूक्ष्मे च ग्राह्ये चतस्रः समापत्तय उक्ताः। सम्प्रति तासां सम्प्रज्ञातत्वमुपसंहरति—

ता एव सबीजः समाधिः ॥ ४६ ॥

ग्रहणग्रहीत्रोरपि सविकल्पत्वनिर्विकल्पत्वभेदेन सानन्दा आनन्दमात्रा सास्मिता अस्मितामात्रा चेति चतस्रः समापत्तयो भवन्ति उक्तन्यायसाम्यात्। एवमष्टसमापत्तयो यास्ता एव सबीजः समाधिः सम्प्रज्ञातः। विवेकख्यात्यभावेन बन्धबीजसत्त्वात् सबीजत्वं द्रष्टव्यम् ॥ ४६ ॥

तत्र निर्विचारसमापत्तेः फलतोऽतिशयमाह—

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

रजस्तमोमलापेतस्य संप्रज्ञातस्य अन्तःकरणस्य यो निर्विचारः सूक्ष्मवस्तुविषयकनिर्विकल्पकसमाधिस्तस्य वैशारद्ये प्रवाहरूपपाटवे सति अध्यात्मप्रसादोऽत्यन्तसत्त्वोद्रेको भवतीत्यर्थः ॥४७॥

तत्फलमाह—

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

तत्र ऋतं सत्यमेव गृह्णाति प्रज्ञायते। तथाच निरोधसमाधिरूपस्य योगस्य पुण्यविशेषद्वारा यथार्थप्रत्यक्षहेतुत्वमितिभावः ॥४८

अत एव तस्य वक्ष्यमाणाभ्यो विषयतो विशेषमाह—

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

शब्दानुमानयोः पदार्थतावच्छेदकव्यापकतावच्छेदकपुरस्कारेणैव ज्ञानजनकत्वात्तद्ग्रहणायोग्यविशेषविषयकत्वादिति यावत्॥

वेदान्तिनस्तु शब्दस्य पदार्थतावच्छेदकपुरस्कारेणैव ज्ञानजनकत्वे मानाभावः। तथाच शब्दस्य विषयस्तच्छक्यो तल्लक्ष्यश्च ग्राह्यः। तेन च ब्राह्मणशब्दलक्ष्यत्वेऽपि न क्षतिः। तथाच महावाक्यार्थबोधप्रयोजकीभूतावान्तरवाक्यस्थपदजन्यस्मृतिकारणीभूतानुभवजनकत्वम् असम्प्रज्ञातयोगस्य स्वजन्यधर्मद्वारेति न कोऽपि विरोधो, न वा महावाक्यार्थबोधानुपपत्तिरपीति भाव इति प्राहुः। यथा च पदार्थतावच्छेदकपुरस्कारेणैव ज्ञानजनकत्वनियमाभावस्तथाव्यक्तमाकर इति दिक्॥ ४९ ॥

नन्वनादिना शब्दादिविषयभोगसंस्कारेणातिबलीयसाऽभिहता समाधिप्रज्ञा न स्थितिं लभेत इत्यत आह—

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

निर्विचारसमाधिप्रज्ञाजन्यः संस्कारो व्युत्थानसंस्कारस्य प्रतिबन्धी बाधक इत्यर्थः। कथमेतदितिचेत्। प्रज्ञासंस्कारस्य तत्त्वसंस्पर्शित्वादिति ध्येयम्॥ ५० ॥

ननु संप्रज्ञातसंस्कारप्रबलं चित्तं तत्प्रज्ञापरम्परामेव जनयेत्। तथाच कथं निर्बीजसमाधिं कुर्यात् तत्राह—

तस्यापि निरोधे सर्ववृत्तिनिरोधान्निर्बीजःसमाधिः॥५१॥

इति समाधिपादः समाप्तः ॥ १ ॥

पुरुषख्यात्यनन्तरं परवैराग्यसंस्कारप्रचयेन तस्य सम्प्रज्ञातसमाधिप्रज्ञासंस्कारस्य, अपिशब्दात् प्रज्ञायाश्च निरोधे सति

सर्वस्य प्रज्ञातज्जसंस्कारप्रवाहस्य निरोधादवसिताधिकारत्वेन चित्तस्य कृत्याभावान्निमित्तापाये नैमित्तिकापाय इति न्यायेन निर्बीजः समाधिर्भवति ॥ ५१ ॥

इति समाधिपादटीकायां पातञ्जले सांख्यप्रवचने योगशास्त्रे समाधिपादः प्रथमः समाप्तः ॥ १ ॥

## द्वितीयः पादः ॥ २ ॥

इतः परं वृत्तिनिरोधसाधनीभूताभ्यासवैराग्यसाधनीभूत-चित्तशुद्धिरिति तत्र हेतुमादौ क्रियायोगमाह—

तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥

तपो ब्रह्मचर्यगुरुसेवादि । स्वाध्यायः प्रणवादिपवित्राणां जपः, मोक्षशास्त्राध्ययनं वा फलाभिसन्धिमन्तरा क्रियमाणानां परमेश्वरे समर्पणमीश्वरप्रणिधानम् । तानि क्रियारूपो योगः, योगसाधनत्वादित्यर्थः ॥ १ ॥

क्रियायोगस्य फलमाह—

समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

समाधेरुत्पादनं भावनं तदर्थः फलं यस्य स तथोक्तः । एवं क्लेशेषु सत्सु समाधिर्न सिद्ध्यति । तस्मात् क्रियायोगक्लेशाँ-स्तनूकृत्य समाधिं भावयति । तनूकरणं क्लेशानां सदोद्भवतायाः कादाचित्कत्वसम्पादनम् । तथाच लब्धावसरः समाधिर्विवेक-ज्ञानमुत्पाद्य सवासनमिथ्याज्ञानं नाशयति ॥ २ ॥

अथ के ते क्लेशाः कियन्तो वेत्यत आह—

अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥

अविद्येत्यादि स्पष्टम् ॥ ३ ॥

चतुर्णामविद्याकार्यत्वेनाविद्यात्मकत्वमाह—

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥४॥

उत्तरेषामस्मितादीनामविद्या क्षेत्रं प्रसवभूमिः । तेषामवान्तर-भेदमाह ॥ प्रसुप्तेति ॥ प्रसुप्तास्तनवो विच्छिन्ना उदाराश्च । तत्र विदेहप्रकृतिलयानां योगिनां क्लेशाः प्रसुप्ताः । तत्त्वज्ञाना-भावेन शक्तिरूपेणावस्थानात् । ते च पुनरुद्भवन्ति ॥ क्रिया-

योगिनां तनवः। विषयसङ्गिनामुच्छिन्ना उदाराश्च भवन्ति। यथा कस्यचिद् यत्र रागस्तत्र क्रोधो विच्छिन्नो, राग उदारश्चेति द्रष्टव्यम्। उक्तं च—

प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम्।
विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्, इति ॥ ४ ॥

तत्राविद्यारूपमाह—

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥

अतस्मिंस्तद्बुद्धिरित्यर्थः ॥ ५ ॥

दृग्दर्शनशक्त्योरेकतेवास्मिता ॥ ६ ॥

दृग्दर्शने दृक्पुरुषः। दृश्यत इति दर्शनं प्रधानम्। शक्तिशब्दो योग्यतार्थकः। भोक्तृयोग्यत्वयोरत्यन्तविभक्तयोर्दृग्दृश्ययोरविद्याकृतैकता तादात्म्यम्। इवशब्दस्त्वहमस्मीतिप्रतीतिकृतत्वं तादात्म्यस्य ज्ञापयति। साऽस्मितेत्यर्थः ॥ ६ ॥

अस्मितायाः कार्यं रागं दर्शयति—

सुखानुशयी रागः ॥ ७ ॥

सुखानुभवे सति स्मृत्या सुखान्तरे तत्साधने वा या तृष्णा सा रागः। सुखमनुशेते विषयीकरोतीति सुखानुशयीत्यर्थः॥७॥

दुःखानुशयी द्वेषः ॥ ८ ॥

एवं दुःखतत्साधनयोर्यः क्रोधः स द्वेष इत्यर्थः ॥ ८ ॥

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ ९ ॥

विदुषो मूर्खस्य वा यो मरणत्रासः सोऽभिनिवेशः। सदा भूयासमिति मूर्खस्येव पण्डितस्यापि दृश्यते यतोऽतः स्वरसवाही।

स कृमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्टयात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयतीत्यर्थः ॥ ९ ॥

अत्र पञ्चप्रकाराः क्लेशा द्विधा भवन्ति । सूक्ष्माः स्थूलाश्च । विवेकज्ञानदग्धाः संस्काररूपाः सूक्ष्माः । क्रियायोगेन तनूकृताः स्थूलाः । तत्र सूक्ष्माणां हानोपायमाह—

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

चित्तस्य कृतकृत्यस्यास्मितायां स्वप्रकृतौ लयः प्रतिप्रसवः। तेन हेयाः सूक्ष्मास्ते क्लेशाः । धर्मिनाशादेव तद्धर्माणां संस्काराणां नाश इत्यर्थः ॥ १० ॥

स्थूलानां हानोपायमाह—

ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

याः क्रियायोगेन विरलाः क्लेशादिवृत्तयः स्थूलास्ताः पुरुषध्यानेनैव हातव्या इत्यर्थः ॥ ११ ॥

ननु तेषां कथं क्लेशत्वमित्याशङ्क्य कर्मतत्फलमूलत्वेन बन्धकत्वात् तेषां क्लेशत्वमित्याह—

क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥१२॥

आशेत इत्याशयः । कर्मणां धर्माधर्मरूपसंस्कारः । क्लेशाः कामादयो मूलमस्येति क्लेशमूलः । स च द्विविधः । दृष्टजन्मवेदनीयोऽदृष्टजन्मवेदनीयश्चेति ज्ञेयम् ॥ १२ ॥

अयं कर्माशयः क्षीणक्लेशानां नास्तीति विशेषमाह—

सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

क्लेशरूपमूले सत्येव कर्मणो विपाकः फलं भवति । स च विपाकस्त्रिविधः । जातिर्जन्म, देवत्वादिर्वा आयुश्चिरकालं देह-

माणयोर्योगः। इन्द्रियैर्विषयानुभवो भोगो मुख्यो, जात्यायुषी तच्छेष इति भावः॥ १३॥

अधुना जात्यादीनां हेयत्वार्थं फलमाह—

ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्॥ १४॥

ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः। अपुण्यं पापं, तद्धेतुका दुःखफलाः। अत्र भोगो विषयानुभवः॥ १४॥

ननु ते दुःखफला हेया भवन्तु। सुखफलास्तु कथं हेया इत्यत आह—

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः॥ १५॥

परिणामो भावी तापो वर्त्तमानः, संस्कारो भूतः। एतान्येव दुःखानि तैरिति विग्रहः। तथाहि। विषयसुखात् कामाऽनलो वर्द्धते। वृद्धौ सत्यां काम्यालाभे दुःखमवश्यं भावीति सुखमपि निश्चितं दुःखमेव। परिणामतापसंस्कारैर्योगाद् गुणवृत्तिविरोधाच्च। गुणाश्चित्तात्मना परिणामतामापन्नानि सत्त्वरजस्तमांसि। तेषां वृत्तयः सुखदुःखमोहाः। तासां विरोधः परस्परमभिभाव्याभिभावकत्वम्। तस्मादित्यर्थः। तथाच भोगस्मृतिसंस्कारपरम्परया दुःखधारा विवेकिनोऽक्षिकल्पस्यैव, न तु कामिनामिति विवेकिभिः सुखफला हेया इति सिद्धम्॥ १५॥

इदानीं शास्त्रे हेयं हेतुर्मोक्षस्तद्धेतुरिति चतुष्टयं व्युत्पादयितुं विशिष्य हेयं दर्शयति—

हेयं दुःखमनागतम्॥ १६॥

अतीतस्य गतत्वाद् वर्तमानस्य भोगेनैव क्षयादनागतमेव हेयमित्यर्थः॥ १६॥

हेयहेतुमाह—

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

दृक् पुरुषः, दृश्यं बुद्धितत्त्वम् । तयोः संयोगोऽभेदभ्रान्तिरूपोऽविद्याकल्पितो हेयस्य दुःखस्य हेतुरित्यर्थः ॥ १७ ॥

दृश्यं प्रपञ्चयति—

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः । स्थितिः प्रकाशक्रिययोः प्रतिबन्धस्तच्छीलं तमः । तदिदं गुणत्रयं स्वस्वकार्ये मिथःसहायमविवेकिभोग्यं त्याज्यं परस्पराश्रयं परस्पराभिभावकं स्वतः परस्पराऽविभागदुर्ज्ञानभेदं प्रधानशब्दवाच्यं भूतेन्द्रियाऽऽत्मकम् । भूतानि स्थूलसूक्ष्माणि इन्द्रियाणि ज्ञानकर्मेन्द्रियाणि एवं मनोबुद्ध्यहङ्काराणि त्रिण्यन्तःकरणान्यात्माभिन्नः परिणामो यस्य तद्भोगाऽपवर्गार्थं भोगमोक्षप्रयोजनकं दृश्यमित्यर्थः ॥१८॥

एतेषां गुणानां परिणामं विभज्य दर्शयति—

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

विशेष्यन्त इति विशेषा व्यावृत्ताः षोडशविकाराः । पञ्च भूतानि दशेन्द्रियाणि एकादशं मनश्चेत्येते षोडश विकारा एव, न तत्त्वान्तरप्रकृतयः । एतेषां विकाराणां प्रकृतयो बुद्धेर्विकृतयः षडविशेषाः पञ्चतन्मात्राहङ्काराः । लिङ्गमात्रं महत्तत्त्वम् । अलिङ्गं गुणानां साम्यावस्थास्वरूपम् । एतानि चत्वारि गुणानां पर्वाणि परिणामाः । गुणत्वं चेतनं प्रति मन्तव्यम् ॥ १९ ॥

एवं दृश्यं निरूप्य द्रष्टारं निरूपयति—

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो, न ज्ञानादिधर्मकः। अतः शुद्धोऽपरिणाम्यपि प्रत्ययं बुद्धिवृत्तिमनुसृत्य पश्यतीति प्रत्ययाऽनुपश्यः। स्वस्य बुद्ध्याविवेकाद् वृत्तिभिरेकीभूतः शब्दादीन् पश्यतीत्यर्थः ॥ २० ॥

तयोः शेषशेषित्वमाह—

तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

दृश्यस्य भोग्यस्य स्वरूपं द्रष्ट्रर्थमेव, न स्वार्थम् अचेतनत्वादित्यर्थः ॥ २१ ॥

ननु द्रष्टुः प्रयोजने सिद्धे सति कृत्याभावाद् दृश्यं प्रधानं निर्व्यापारं स्यात्। तथाचेदानीं संसारो नोपलभ्येतेत्यत आह—

कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥

प्रधानमेकं पुरुषास्त्वनन्ता इति स्थितिः। अजामेकामिति श्रुतेः। तत्र प्रधानं यं पुरुषं प्रति भोगापवर्गौ कृतवत् स कृतार्थः। स्वामित्वात्। यथा भृत्येन कृतजयेन स्वामी कृतजय इत्युच्यते तद्वत्। कृतार्थं कमपि पुरुषं प्रति नष्टमदर्शनं गतमपि तद् दृश्यमनष्टम्। पुरुषान्तरसाधारणत्वात्। एतदुक्तं भवति। प्रधानस्य कृतार्थं प्रति न प्रवृत्तिरनागतावस्थस्यैव पुरुषार्थस्य प्रवृत्तिहेतुत्वात्। अकृतार्थं प्रति महदाद्याकारेण प्रवृत्तिस्तु घटत एव। तथाचैकमुक्तौ न सर्वमुक्तिप्रसङ्गः ॥ २२ ॥

दृश्यद्रष्टारौ व्याख्याय हेयहेतुं संयोगं निरूपयति—

स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥

स्वं दृश्यं, तस्य शक्तिर्जडत्वेन दृश्यत्वयोग्यता। स्वामी पुरुषस्तस्य शक्तिश्चेतनत्वेन साक्षित्वयोग्यता स्वरूपात्मिकैव।

तयोः स्वस्वामिस्वरूपयोर्विविधशब्दाद्याकारदृश्यबुद्धिस्वरूपोपलब्धिर्भोगः । स्वामिस्वरूपस्योपलब्धिरपवर्गः । तद्धेतुः संयोगो भोक्तृभोग्यभावः स्वस्वामिभावाख्यापरपर्यायः । स च संयोगः कार्येणैव ज्ञेयः । कार्यं च तत्स्वरूपोपलब्धिरेव ॥ २३ ॥

स्वरूपस्य स्वरूपं कार्यं चोक्त्वाकारणमाह—

तस्य हेतुरविद्या ॥ २४ ॥

भ्रान्तिवासनासंयोगस्य कारणमित्यर्थः । अहमिति दृग्दृश्ययोरभेदभ्रान्तिः । तद्वासनावासितं चित्तं प्रलये लीनं प्रधानभावमुपगतं सर्गकाले पुरुषं प्रति सत्त्वेनैव जायते । तेनैव संयोगेनाऽविवेकिनो बन्धो विवेकिनो मोक्षश्च भवति ॥ २४ ॥

एवं हेयं तद्धेतुं चोपपाद्य हेयस्य हानं मोक्षं व्युत्पादयति—

तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम् ॥ २५ ॥

तस्या अविद्याया अभावाद्विद्यया नाशात्तत्कार्यस्य संयोगस्य दुःखस्य हेयस्य हेतोरभावो विनाशो हानं यत्तदेव दृशेर्नित्यमुक्तस्य कैवल्यमित्यर्थः ॥ २५ ॥

मोक्षमुक्त्वा तद्धेतुमाह—

विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

दृग्दृश्ययोर्भेदो विवेकः । तस्य ज्ञानं ख्यातिः । विप्लवो मिथ्याज्ञानम् । प्रथमतो खल्वागमात् सामान्यतो विवेकख्यातिरुदेति सा नाविद्यां नाशयति परोक्षत्वात् । यदा तु ध्यानप्रकर्षजा चित्प्रतिबिम्बवती साक्षात्काररूपा सवासनमिथ्याज्ञानं नाशयतीत्यविप्लवा सती हानस्य दुःखस्य आत्यन्तिकस्योपायभूतेत्यर्थः ॥ २६ ॥

स्थिरविवेकख्यातेर्जीवन्मुक्तस्य ज्ञानवैभवमाह–

तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

प्रकृष्टोऽन्तोऽवसानं फलत्वेन यासां ताः प्रान्ताश्चरमा इति यावत्। प्रान्ता भूमयो यस्याः सा प्रान्तभूमिः। तस्य विदुषः सप्तप्रकारा प्रज्ञाऽवस्था चरमा भवति। ज्ञातव्यमखिलं ज्ञातम् इति या सैका सर्वजिज्ञासानिवर्त्तकत्वात् प्रान्ता। न हीयमज्ञस्य संभवति। तत्तदालम्बनसमाधीनां प्रधानान्तप्रज्ञायां स्थिरायामप्यात्मजिज्ञासायाः सत्त्वेन तत्प्रज्ञाया अचरमत्वात्। एवमग्रिमावस्थानां प्रान्तत्वं मन्तव्यम्। हातव्याः सर्वे बन्धहेतवो हताः, न किञ्चिन्मम हेयमस्तीति द्वितीया। कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तमिति तृतीया। विवेकज्ञानसंपादनेन अखिलं कृतं, न किञ्चित् कर्तव्यमस्तीति चतुर्थी। एताश्चतस्रः कार्यविमुक्तिसंज्ञाः। चित्तविमुक्तिसंज्ञास्तु तिस्रः। यथा कृतार्थं बुद्धिसत्त्वमित्येका। बुद्ध्यादिरूपा गुणा अपि गिरिशिखरच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सम्प्रान्तेनात्यन्तिकमस्तं गच्छन्ति। तेषां नास्ति पुनः प्ररोहः प्रयोजनाभावादिति द्वितीया। तथाऽहङ्गुणातीतः स्वरूपमात्रावस्थितश्चिदेकरस इति तृतीया प्रज्ञावस्था इत्यर्थः ॥ २७ ॥

एवंजिज्ञासाजिहासाप्रेप्साचिकीर्षाशोकभयविकल्पान्तफलाः सप्त प्रज्ञाभूमयः प्रान्ताः प्रतिपाद्य सम्प्रति प्रज्ञासाधनान्याह–

योगाङ्गानामनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा-
विवेकख्यातेः ॥ २८ ॥

योगाङ्गानां योगस्य चानुष्ठानादशुद्धेः क्लेशादिरूपायाः क्षये जायमाने ज्ञानस्य दीप्तिर्विशुद्धिः अविप्लुय आविवेकख्यातर्भव-

तीत्यर्थः । साङ्गयोगानुष्ठानस्य शुद्धिद्वारा प्रज्ञासाधनत्वमिति भावः ॥ २८ ॥

कानि योगाङ्गानीत्यत आह—

यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-
समाधयोऽष्टावङ्गानि ॥ २९ ॥

स्पष्टम् ॥ २९ ॥

अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः ॥ ३० ॥

अन्यानपेक्षत्वेन सफलत्वाद्यमा आदावुच्यन्ते । पश्चाद् यमसापेक्षा नियमाः । एतदुभयाधीनशुद्ध्यपेक्षा आसनादय उत्तरोत्तरहेतवः पश्चादुच्यन्ते । अपरिग्रहो देहयात्रातिरिक्तभोग-साधनास्वीकारः ॥ ३० ॥

एतेषां योगिभिरुपादेयविशेषमाह—

जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा
महाव्रतम् ॥ ३१ ॥

जातिर्ब्राह्मणत्वादिः । देशस्तीर्थादिः । कालो नियतश्चतुर्दश्यादिः । अनियतो ब्राह्मणभोजनाद्यवसरः समयः । तत्र सदा ब्राह्मणादिकं न हनिष्यामीत्यहिंसा जात्या परिच्छिन्ना, प्रयोगे चतुर्दश्यादौ वा न हनिष्यामीति देशकालाभ्यामवच्छिन्ना। देवब्राह्मणाद्यर्थातिरेकेण न हनिष्यामीति समयावच्छिन्ना । एतैश्चतुर्भिरनवच्छिन्ना अहिंसा सार्वभौमा महाव्रतम् इत्युच्यत इत्यर्थः ॥ ३१ ॥

नियमानाह—

शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥

स्पष्टम् ॥ ३२ ॥

वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

एतेषां यमनियमानां वितर्कैर्हिंसादिविकल्पैर्हनिष्याम्यनृतं वक्ष्यामि परस्वमादास्य इत्यादिभिर्बाधने प्राप्ते सति यमादिपरो ब्राह्मणः प्रतिपक्षभावनं कुर्यादित्यर्थः। तद्भावनं च पूर्वोक्तधर्मास्त्यक्त्वाऽहं वान्ताशी कुक्कुरतुल्य इत्याकारो वितर्कः। उक्तं च—

शय्याऽऽसनस्थोऽपि पथि व्रजन् वा
स्वस्थः परिक्षीणवितर्कजालः।
संसारबीजक्षयमीक्षमाणः
स्यान्नित्यमुक्तोऽमृतभोगभोगी, इति ॥ ॥ ३३ ॥

प्रतिपक्षभावनात्मकान् वितर्कान् दर्शयति—

वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

अत्र प्रतिपक्षभावनं लक्ष्यनिर्देशः। वितर्का इति लक्षणनिर्देशः। वितर्करूपमाह ॥ हिंसादय इति॥ तत्र हिंसा तावत् कृतकारितानुमोदितभेदेन त्रिधा। तत्राप्येकैका पुनस्त्रिविधेत्याह, क्रोधलोभमोहपूर्वकेत्यनेन ॥ तत्र लोभो मांसचर्मादिः। क्रोधोऽनेनापकृतमित्यादिः। मोहो नाधर्मो भविष्यतीत्यादिरूपेणेत्यर्थः। तेऽपि पुनः प्रत्येकं त्रिविधाः, मृदुमध्याधिमात्रा इति। तेषु प्रतिपक्षभावनमाह॥दुःखाज्ञानानन्तफला इति ॥ तत्र शरीरार्थं या हिंसा सा लोभपूर्विका। एवं क्रोधमोहावपि शरीराभिमानमुद्दिश्यैवेत्यवगन्तव्यम्। साऽपि, कृता कारिता अनुमोदिता चैव प्रत्येकं त्रिधा संपद्यते। ते पुनः प्रत्येकं मृदु-

मध्याधिमात्रा इति सप्तविंशतिभेदा भवन्ति । मृदुमध्याधिमात्रा अपि पुनस्त्रेधा भवन्ति ॥ मृदुमृदुः । मध्यमृदुः । तीव्रमृदुः । तथा मृदुमध्यो, मध्यमध्यस्तीव्रमध्यः । तथा मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । एवमेकाशीतिभेदा हिंसा भवति ॥ सा पुनर्नियमविकल्पसमुच्चयभेदादसंख्येया । प्राणभृद्भेदस्यापि अपरिसंख्येयत्वात् । एवमनृतादिष्वपि योज्यम् । ते खल्वमी वितर्का दुःखाऽज्ञानानन्तफलाः । तथाहि । हिंसकस्तावत् प्रथमं वध्यस्य जीवविशेषस्य वीर्यमपाकरोति । ततश्च शस्त्रादिनिपातेनात्यन्तं दुःखयति । ततो जीवितादपि मोचयति । ततः परस्य वीर्यादिनाशादस्य हिंसकस्यापि कालान्तरे चेतनाचेतनं सर्वं क्षीणवीर्यं भवति । ततो दुःखोत्पातः । ततो मरणानन्तरं महानरकं तिर्यक्प्रेतादियोनिषु दुःखमनुभवतीति प्रतिपक्षभावनमिति सङ्क्षेपः ॥ ३४ ॥

एवमहिंसापरस्य योगिनस्तत्कृतैश्वर्यसूचिकाः सिद्धीः क्रमेण आह—

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥

उक्तवितर्केण अहिंसास्थैर्ये तत्संनिधौ वैरत्यागः परस्परं प्राणिनां भवतीत्यर्थः ॥ ३५ ॥

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

सत्यभाषणरूपधर्मप्रतिष्ठायां क्रियाफलाश्रयत्वं, कण्ठताल्वादिरूपक्रियायाः फलस्यामोघवचसः । धार्मिको भूया इत्युक्ते भवति धार्मिकः । यागादिधर्ममननुष्ठायापि स्वर्गं प्राप्नुहीत्युक्ते स्वर्गं प्राप्नोतीत्यादिवाक् सत्या भवतीत्यर्थः ॥ ३६ ॥

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥

सर्वदिग्गतानि सर्वोत्कृष्टानि रत्नादीन्यस्योपस्थितानि भवन्ति ॥ ३७ ॥

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥

सिद्धौ सत्यां निरतिशयं सामर्थ्यं भवति । वीर्यनिरोधो हि ब्रह्मचर्यम् ॥ ३८ ॥

अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

अपरिग्रहस्थैर्ये सति जन्मकथन्ता सम्बोधः । अतीतभाविजन्मनां कथन्ता कथमहमासं पूर्वं, किंस्विदिदं जन्म, कथंस्विदिदं, के वा भविष्यामः, कथं वा भविष्यामइत्येवम्प्रकारेणात्मस्वरूपसंसारस्वरूपवैराग्यपूर्वकदृढतरजिज्ञासा भवति ॥ ३९ ॥

उक्ता यमसिद्धयः। अधुना नियमसिद्धय उच्यन्ते—

शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

शौचस्वभावस्य पुरुषस्य तदभावे कायाशुद्धिं पश्यतो जुगुप्सा। अशुचिस्वभावे काये नाहङ्कारः कर्त्तव्य इति शौचपरस्य मम कायशुद्ध्यभावात्, किमु प्रमत्तकायशुद्धिविचारेणेति परकीयशरीरासंसर्गो भवतीत्यर्थः ॥ ४० ॥

इदानीमन्तःशुद्धिमाह—

सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-
योग्यत्वानि च ॥ ४१ ॥

शौचादित्यनुवर्त्तते । भवन्तीति शेषः । शुचेः सत्त्वशुद्धिः, ततः सौमनस्यं, तत ऐकाग्र्यं, तत इन्द्रियजयः, ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीत्येतच्छौचस्थैर्याद् अधिगम्यत इत्यर्थः ॥ ४१ ॥

सन्तोषादनुत्तमः सुखलाभः ॥ ४२ ॥

तृष्णाक्षयसिद्धौ अस्य निष्कामस्य निरतिशयसुखानुभवो भवतीत्यर्थः ॥

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्, इति भारतोक्तेः ॥ ४२ ॥

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

तपसः स्वधर्मकृच्छ्राद्यनुष्ठानेन क्लेशरूपपापक्षयात् कायस्याणिमादिसिद्धिरिन्द्रियाणां सूक्ष्मार्थग्राहत्वं चेत्यर्थः ॥ ४३ ॥

स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥

इष्टमन्त्रादिजपात् स्वेष्टदेवतायाः संप्रयोगः संभाषणानुग्रहादिः सिद्ध्यतीत्यर्थः ॥ ४४ ॥

समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

समाधिसिद्धिरीश्वरार्पितसर्वभावस्य भवतीत्यर्थः ॥ ४५ ॥

एवं नियमसिद्धीः प्रदर्श्य आसनसिद्धिमदर्शनार्थमासनस्वरूपमाह—

स्थिरसुखमासनम् ॥ ४६ ॥

निश्चितं सुखावहं च यत्तदासनमित्यर्थः । आस्यतेऽनेनेति आसनं द्विविधं बाह्यशारीरभेदेन । बाह्यं चैलाजिनकुशोत्तरम् । शारीरं पद्मस्वस्तिकाद्यनेकविधम् ॥ ४६ ॥

स्थैर्यासनोपायमाह—

प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥

स्वाभाविकः प्रयत्नश्चलत्वादासनविघातकः । तस्योपरमेण आसनं सिद्ध्यति । अनन्ते नागनायके चित्तस्य समा[illegible]

ऽभिमानाभावेनासनदुःखास्फूर्त्या आसनं सिद्ध्यति ॥ ४७ ॥

तत्सिद्धिलिङ्गमाह—

ततो द्वन्द्वानभिघातः ॥ ४८ ॥

आसनजयाच्छीतोष्णादिभिरताडनं भवति ॥ ४८ ॥

सम्प्रत्यासनसाध्यं प्राणायाममाह—

तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

आसनस्थैर्ये सति बाह्यकोष्ठवाय्वोरन्तर्बहिर्गतिविच्छेदः प्राणायाम इत्यर्थः ॥ ४९ ॥

सामान्यलक्षणमुक्त्वा लक्ष्यं प्राणायामं विभजते—

स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥

प्राणायामश्चतुर्विधः । बाह्यवृत्तिराभ्यन्तरवृत्तिस्तम्भवृत्तिस्तुरीयश्चेति । तत्र कोष्ठ्यस्य वायो रेचनेन बहिर्गतस्य बहिरेव विधारणं बाह्यवृत्तिः । स च रेचको बाह्यवायोः पूरकेणान्तर्गतस्यान्तरधारणम् आभ्यन्तरवृत्तिः । स च पूरकः । रेचकपूरकप्रयत्नं विना प्राणस्य केवलविधारकप्रयत्नेन गतिविच्छेदः स्तम्भवृत्तिः । स च कुम्भकः। त्रिविधोऽयं प्राणायामो देशकालसंख्यादिभिर्दीर्घसूक्ष्मश्चेति परिदृष्टः ॥ ५० ॥

तुरीयं प्राणायामं दर्शयति—

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

उक्तो वायो देशो विषयः, आभ्यन्तरविषयो हृदयादिः । तयोराक्षेपः सूक्ष्मदृष्ट्या पर्यालोचनं यस्य पूर्वकालेऽस्ति स

चतुर्थस्तम्भवृत्तिः । तस्यापि दीर्घसूक्ष्मत्वं पूर्ववत् । न चाऽस्य कुम्भकान्तर्भावः शङ्कनीयः ॥ ५१ ॥

सम्प्रति प्राणायामस्य योगान्तत्वे द्वारभूतफलमाह—

तत: क्षीयते प्रकाशावरणम् ॥ ५२ ॥

धारणासु च योग्यता मनसः ॥ ५३ ॥

प्राणायामाभ्यासाद्बुद्धिसत्त्वस्य पिधानं क्लेशपापरूपं क्षीयते तदुक्तं मनुना— प्राणायामादहेद्दोषानिति ॥ ५२ ॥

किञ्च, धारणासु चेति ॥ प्राणायामादावरणक्षये सति मनसः सूक्ष्मलक्ष्यधारणासु च योग्यता भवतीत्यर्थः ॥ ५३ ॥

उक्तयमादिभिः संस्कृतचित्तस्य प्रत्याहारो भवतीति मत्वा लक्षयति—

स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥

शुद्धचित्तस्य स्वरूपानुकारे विषयैरसम्प्रयोगे सति सः । वैराग्याद् विषयेभ्यो वियुज्य तत्त्वाभिमुख्ये सतीति यावत् । इन्द्रिणां यश्चित्तस्य स्वरूपानुकारो विषयत्यागेन तत्त्वाभिमुख्य-रूपः। इवशब्दश्चित्तवत्तत्त्वाभिमुख्यमिन्द्रियाणां तदानीं नास्तीति ज्ञापनार्थः ॥ ५४ ॥

प्रत्याहारस्य योगद्वारभूतफलमाह—

*ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥*

इति द्वितीयः पादः ॥ २ ॥

ततः परेति स्पष्टम् ॥ ५५ ॥

इति पातञ्जले सांख्यप्रवचने योगशास्त्रे साधननिर्देशो द्वितीयः पादः ॥ २ ॥

## तृतीयः पादः ॥ ३ ॥

उक्तानि पञ्चबहिरङ्गानि । अथेदानीमन्तरङ्गसाधनभूतां धारणां लक्षयति—

देशबन्धश्चित्तस्य धारणा ॥ १ ॥

नाभिचक्रहृदयनासाग्रादौ देशे बाह्ये वा विषयविशेषे सम्प्रज्ञातयोगसिद्धये चित्तस्य बन्धः स्थिरीकरणं धारणेत्यर्थः ॥१॥

धारणासाध्यं ध्यानं लक्षयति—

तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

यत्र धारणाविजातीयवृत्तिपरिहारे यत्नापेक्षा भवति तत्रैव या प्रत्ययानां वृत्तीनामेकतानता यत्नमनपेक्ष्यैवैकविषयता तद् ध्यानमित्यर्थः ॥ २ ॥

समाधिं लक्षयति—

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

तदेव स्वस्थचित्तवृत्तिप्रवाहरूपं ध्यानमेवार्थमात्रस्वरूपेण निर्भासमानं समाधिः । मात्रचोऽर्थमाह ॥ स्वरूपशून्यमिवेति ॥ ध्यानस्वरूपज्ञानस्वरूपशून्यम् । इवशब्देन ध्यानस्य सत्तां द्योतयति । यथा स्वच्छमणिः कुसुमरूपेणैव, न स्वरूपेण तद्वदित्यर्थः ॥ विजातीयप्रत्ययरहिता धारणा, अविच्छिन्नं तु ध्यानं ध्यानध्यातृध्येयमूर्त्तिमध्ये ध्येयमात्रस्फूर्तिमान् समाधिः। स एव ध्येयस्फूर्त्तिशून्योऽसम्प्रज्ञात इति भेदः ॥ ३ ॥

एतत्त्रितयस्य व्यवहारलाघवफलां संयमसंज्ञामाह—

त्रयमेकत्र संयमः ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

संयमस्य फलमाह—

तज्जयात् प्रज्ञालोकः ॥ ५ ॥

तस्य संयमस्य जयात् स्थैर्यात् प्रज्ञायाः समाधिजायाः आलोको नैर्मल्यं भवति । भ्रान्तिसंशयादिमलशून्या ध्येयतत्त्वस्फूर्तिर्भवतीत्यर्थः ॥ ५ ॥

क्व पुनः संयमस्येदं फलमित्याशङ्क्याह—

तस्य भूमिषु विनियोगः ॥ ६ ॥

तस्य संयमस्य भूमिषु सवितर्कादिभेदेन सम्प्रज्ञातयोगावस्थाभूमिषु विनियोगः पूर्वं पूर्वं जित्वा उत्तरोत्तरप्राप्तये योग एवावश्यकः । तदुक्तं—

योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्त्तते ।
योऽप्रमत्तस्तु योगेन स योगे रमते चिरम् ॥ ॥ ६ ॥

ननु योगाङ्गानां मध्येऽङ्गपञ्चकं पूर्वपादे निरूपितं, त्रयमत्र कथमित्याशङ्क्याह—

त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

पञ्चभ्यो यमादिभ्यः समाधौ चित्तादिमलरूपप्रतिबन्धकनिवर्तकेभ्योऽत एव बहिरङ्गभूतेभ्यो धारणादित्रयमन्तरङ्गम् । अङ्गिसमानविषयतया साक्षात्स्वरूपोपकारत्वात् । अत एव तत्तद्भूमिषु विनियोगार्थमत्र निरूपितमित्यर्थः ॥ ७ ॥

तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

त्रयमप्यव्यवहितोक्तं निर्बीजस्य बहिरङ्गम् । अङ्गिनो निर्विषयत्वात् । त्रयस्य सविषयत्वेन समानविषयत्वाभावात् । अतो व्युत्थानरूपस्य त्रयस्य सम्प्रज्ञातपरिपाकप्रसादरूपपरवैराग्यद्वारा सम्प्रज्ञातस्यापि निरोधान्निर्बीजो भवतीति पारम्पर्येणोपयोगाद् बहिरङ्गमिति भावः ॥ ८ ॥

संप्रति संयमभूतिं वक्तुकामस्तस्य लक्षणान्
दर्शयति—

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोध-
क्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥

व्युत्थानं संप्रज्ञातः। स निरुध्यते येन तद् परं वैराग्यं निरोधः। तत्र यदा व्युत्थानाऽभिभवो निरोधप्रादुर्भावश्च भवतस्तदा निरोधसंस्कारस्यासंप्रज्ञातस्य क्षणेनावसरेण युक्तं चित्तं भवति योगे च चञ्चलशीलस्याभिभूतप्रादुर्भूतयोः संस्कारयोर्योगधर्मित्वेनान्वयः। स निरोधाख्यपरिणाम इत्यर्थः ॥ ९ ॥

सर्वात्मना व्युत्थानसंस्काराभिभवे सति

तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

तस्य व्युत्थानसंस्कारमलस्य चित्तस्य परम्परामात्रवाहिता भवति निरोधसंस्कारप्रचयात् ॥ १० ॥

एवं निर्बीजावस्थामुक्त्वा संप्रज्ञातपरिणाममाह—

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधि-
परिणामः ॥ ११ ॥

चित्तस्य सर्वार्थता नानार्थाकारत्वं विक्षिप्तत्वरूपो धर्मः। एकाग्रता वक्ष्यमाणो धर्मः। तयोर्यथाक्रमं क्षयोदयौ तिरोभावप्रादुर्भावौ समाधिपरिणाम इत्यर्थः। तथाचाभ्यासेन विक्षेपे गते एकाग्रतास्थैर्यं समाधिरिति भावः ॥ ११ ॥

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तैकाग्रता-
परिणामः ॥ १२ ॥

शान्तोऽतीतः, उदितो वर्तमानः। तावेकविषयत्वेन तुल्यौ

तौ प्रत्ययौ च तुल्यप्रत्ययौ चित्तस्य नैरन्तर्येण वृत्तिद्वयमेकरूपमेकाग्रतास्य परिणाम इत्यर्थः ॥ १२ ॥

मनःपरिणामेषु निरोधसमाध्येकाग्रतासु उक्तन्यायमन्यत्रातिदिशति—

## एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥ १३ ॥

एतेन मनःपरिणामव्याख्यानेन व्याख्याता भवन्त्यन्ये मनःपरिणामाः।ते केइत्याशङ्कायामाह।।भूतेन्द्रियेषुधर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चेति । धर्मपरिणामो यथा मृदः पिण्डरूपधर्माऽभिभवेन घटरूपः परिणामः प्रादुर्भवति । लक्षयति कार्यरूपं धर्मं व्यावर्तयतीति लक्षणम् । यथा घटस्य वर्तमानत्वादिलक्षणं वर्तमानत्वमतीतानागतेभ्यो व्यावर्त्तयतीति लक्षणम् । एवं लक्षणपरिणामस्य तदवच्छिन्नस्य धर्मस्य वा अवस्थापरिणामो द्रष्टव्यः । यथा वर्तमानस्य नवत्वपुराणत्वादयोऽवस्थापरिणामा इत्यादि स्वयमूह्यम् ॥ १३ ॥

यस्यायं त्रिविधः परिणामस्तं धर्मिणं दर्शयति—

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥

शान्ता कृतव्यापारा अतीताः, उदिता जलाऽऽहरणादिव्यापाराविष्टा वर्तमानाः, अव्यपदेश्याः शक्तिरूपेण मृदादिषु धर्मिषु स्थिता अनागतास्तान् धर्मान् योऽनुपतति सोऽनुपाती धर्मी यथा मृत्सुवर्णादिः ॥ १४ ॥

नन्वेकस्य धर्मिणः परिणामबहुत्वे को हेतुरित्यत आह—

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

मृदि चूर्णपिण्डयोः पिण्डघटयोः पौर्वापर्यरूपक्रमस्यान्यत्वं दृश्यमानमेकस्या एव मृदः परिणामानां चूर्णादीनां धर्माणामन्यत्वे हेतुर्ज्ञापक इति धर्मादयो निरूपिताः ॥ १५ ॥

सम्प्रत्यापादपरिसमाप्तेः संयमस्य तत्तद्विषये वशीकारज्ञानाय विभूतय उच्यन्ते—

परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥

पूर्वोक्तधर्मादिपरिणामत्रयसंयमाद्योगिनोऽतीतानागतज्ञानं भवति। प्रकाशप्रतिबन्धीभूतयो रजस्तमसोः संयमेन निवृत्तेरिति भावः ॥ १६ ॥

शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ॥ १७ ॥

अस्य गोशब्दस्य गोशब्दप्रत्ययाभ्यासाऽभेदेन विकल्पिते सङ्कीर्णेऽर्थे सङ्केतग्रहो बालस्येति व्यक्तमाकरे। तथा, गौरिति शब्दो, गौरित्यर्थो, गौरिति प्रत्यय आबालपण्डितं शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करः प्रसिद्धः। तेषां शास्त्रयुक्तिभ्यां यो विभागः सिद्धः—वर्णव्यङ्ग्यं पदं पदव्यङ्ग्यं वाक्यमिति शब्दतत्त्वम्, अर्थो द्रव्यादिर्वाच्यो लक्ष्यश्चेत्यर्थतत्त्वं, शब्दजन्योऽर्थविषयो बुद्धिस्थप्रत्यय इति ज्ञानतत्त्वं, तस्मिन् विभागे संयमात् सर्वशब्दादि वशीकारसूचकं सर्वभूतानां पश्वादीनां रुतज्ञानं भवति। इममर्थमेते वदन्तीति संयमी जानातीत्यर्थः ॥ १७ ॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ॥ १८ ॥

अनुभवक्लेशजाः स्मृतिक्लेशहेतवः, कर्मजाः सुखदुःखहेतव इति द्वयोरपि संस्काराः सन्ति चित्तधर्माः पूर्वजन्मपरम्परासञ्चिताः। तेषु श्रुतेषु अनुमितेषु च संयमेन साक्षात्कृतेषु तद्धेतु-

त्वेन स्वीयपरकीयपूर्वजन्मपरम्परायाः साक्षात्कारो भवति ॥

अत्र भगवान् जैगीषव्य उदाहरणम् । तत्र भगवान् आवट्यो जैगीषव्यं प्रति संस्कारसाक्षात्करणेन दशसु महासर्गेषु भव्यत्त्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गर्भसम्भवं दुःखं संपश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन च सुखदुःखयोः किमऽधिकमनुभूतम् । अत्र जैगीषव्यो दशस्वपि महासर्गेषु सुखदुःखयोर्मध्ये दुःखमेवाधिकमनुभूतम् । तत् किं प्रधानवशित्वमनुत्तमं सन्तोषसुखमपि दुःखपक्ष एव निक्षिप्तम् ? । कः सन्देहः । *विषयसुखापेक्षयैवानुत्तमं, न तु कैवल्यापेक्षयेति । त्रिगुणात्मकस्य* प्रत्ययहेयत्वात् ॥

ननु यत्र संयमस्तस्य साक्षात्कार इति नियमात् कथं संस्कारसाक्षात्कारसंयमात् पूर्वजन्मज्ञानमुत्पन्नमिति चेत् सत्यम् । सानुबन्धसंस्कारसंयमादनुबन्धत्वेन पूर्वजन्मनो ज्ञानमिति मन्तव्यम् ॥ १८ ॥

सिद्ध्यन्तरमाह–

प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

परचित्तसंयमात् साक्षात्कारो भवतीत्यर्थः ॥ १९ ॥

सिद्ध्यन्तरमाह—

कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशाऽसम्प्रयोगेऽन्तर्धानम् ॥ २० ॥

कायस्य यद्रूपं चाक्षुषत्वप्रयोजकमस्ति तस्मिन् संयमात्तस्य रूपस्य परचक्षुर्ग्राह्यत्वानुकूलायाः शक्तेः स्तम्भे प्रतिबन्धे जाते सति परचाक्षुषज्ञानाऽविषयत्वेऽन्तर्धानं योगिदेहस्याचाक्षुषत्वं यथाकामं सिद्ध्यतीत्यर्थः । एतेन स्वीयशब्दादिसंयमाच्छ्रोत्रा-

ऽग्राह्यत्वादिसिद्धिरुक्ता भवति ॥ २० ॥

विभूत्यन्तरमाह—

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्त-
ज्ञानमरिष्टेभ्यो वा ॥ २१ ॥

पूर्वजन्मकृतमिदानीं स्थितं कर्म द्विविधं, सोपक्रमं निरुपक्रमं च । फलदानव्यापारयुक्तं सोपक्रमम् । कालान्तरे फलप्रदं निरुपक्रमम् । तत्र संयमेन साक्षात्काराद्द्विपयस्यायुषोऽवसानमपरान्तशब्दितं ज्ञायते । परस्य प्रजापतेरपरान्तो महाप्रलयः । नराणान्तु मरणमपरान्तः । तस्य ज्ञानम् अस्मिन् देशकालादौ मम देहवियोगसाक्षात्कारः । प्रसङ्गाद् अयोगिसाधारणमाह ॥ अरिष्टेभ्यो वेति॥ त्रिविधमरिष्टम् आध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राद्य स्वदेहेऽपिहितकर्णे न शृणोति । ज्योतिर्नेत्रेऽवष्टब्धे न पश्यति । द्वितीयं यमपुरुषान् पश्यति । पितॄन् अतीतानकस्मात् पश्यति । तृतीयं स्वर्गमकस्मात् सिद्धान् वा पश्यतीति, विपरीतं वा सर्वमित्यनेनापि भवेदपरान्तज्ञानमित्यर्थः ॥ २१ ॥

मैत्र्यादिषु बलानि ॥ २२ ॥

पूर्वं मैत्रीकरुणामुदितासु संयमो विहितः । तेन तासां बलानि वीर्याणि भवन्ति, यैर्योगी प्राणिमात्रस्य सुखकरः सुहृद् भवति ॥ २२ ॥

बलेषु हस्तिबलादीनि ॥ २३ ॥

हस्तिहनुमद्गरुडादिबलेषु तद्भावेन संयमाच्चानि बलानि योगिनः प्रादुर्भवन्ति, चित्तस्य स्वतः सामर्थ्यादित्यर्थः ॥२३॥

प्रवृत्त्या लोकन्यासात् सूक्ष्मव्यवहित-
विप्रकृष्टज्ञानम् ॥ २४ ॥

ज्योतिष्मती प्रवृत्तिः प्रागुक्ता । तस्या य आलोको ज्योतिःसाक्षात्काररूपप्रवृत्तेरास्पदं सर्वतो विप्रसृतं निर्मलबुद्धिसत्त्वं, तस्य सूक्ष्मे परमाण्वादौ भूव्यवहिते निध्यादौ, विप्रकृष्टे मेर्वन्तरवर्त्तिरसायनादौ प्रक्षेपात्तेषां ज्ञानं साक्षात्कारो भवति । सौरालोकसंयोगाद्घटादिज्ञानवदित्यर्थः ॥ २४ ॥

एवं संयमेन साक्षात्कृतबुद्ध्या लोकद्वारा भुवनज्ञानमुक्त्वा भौतिकालोकद्वारा तदाह—

भुवनज्ञानं सूर्ये संयमात् ॥ २५ ॥

दिवि देदीप्यमानमार्त्तण्डे सुषुम्नाऽऽदिसहस्ररश्मिमालिनि संयमाद् दृश्याभिन्नं चित्तं चतुर्दशभुवनानि साक्षात्करोतीत्यर्थः ॥ २५ ॥

चन्द्रे ताराव्यूहज्ञानम् ॥ २६ ॥

चन्द्रे संयमान्नक्षत्राणां सन्निवेशविशेषं साक्षात्करोति । सूर्यस्य नक्षत्राभिभावकत्वात्तत्संयमात्तद्रूपज्ञानं न भवति इति भावः ॥ २६ ॥

ध्रुवे तद्गतिज्ञानम् ॥ २७ ॥

ध्रुवे संयमात् तासां ताराणां गतिं जानातीत्यर्थः ॥ २७ ॥

बाह्यसिद्धीरुक्त्वा आध्यात्मिकसिद्धीराह—

नाभिचक्रे कायव्यूहज्ञानम् ॥ २८ ॥

कायस्य मध्यभागे यन्नाभिचक्रमाधारलिङ्गचक्राभ्यामुपरि स्थितं दशपत्रं, तस्मिन् संयमाद्देहस्य सन्निवेशं जानाति । स्वदेहं त्यक्त्वा तस्मिन् देहे अभिमन्यमानस्तिष्ठतीत्यर्थः ॥ २८ ॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ २९ ॥

जिह्वादतोरधस्तात् कण्ठकूपस्य कूपाकारः प्रदेशोऽस्ति, यत्र, प्रमाणादेः संघर्षात् क्षुत्पिपासे भवतः । तत्र संयमात् क्षुत्पिपासानिवृत्तिरित्यर्थः ॥ २९ ॥

कूर्मनाड्यां स्थैर्यम् ॥ ३० ॥

कूपादध उरसि कूर्माकारा नाड्यस्ति । तत्र संयमात् तत्प्रविष्टस्य चित्तस्य स्थैर्यं भवतीत्यर्थः ॥ ३० ॥

मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३१ ॥

शिरःकपालयोश्छिद्रं ब्रह्मरन्ध्राख्यं सुषुम्नायोगाद्भास्वरं मूर्द्धज्योतिः। तत्र संयमात् सिद्धानां द्यावापृथिव्योरन्तराचारिणां दर्शनं भवति ॥ ३१ ॥

प्रातिभाद्वा सर्वम् ॥ ३२ ॥

विवेकख्यातिर्हि प्रसंख्यानं संसारतारकम् । तदर्थं संयमे क्रियमाणे प्रसंख्यानोदयसूचकं प्रतिभया ऊहमात्रेण जातं प्रातिभं ज्ञानं भवति । तेन वा योगी सर्वं जानातीत्यर्थः । यथा सूर्योदयसूचकारुणप्रभया लोकः पश्यति ॥ ३२ ॥

हृदये चित्तसंवित् ॥ ३३ ॥

अधोमुखे हृत्पद्मे चित्तस्य स्थानं तस्य संयमात् सवासनस्य चित्तस्य संविद्भवतीत्यर्थः ॥ ३३ ॥

सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्॥३४॥

बुद्ध्यात्मनोर्भोग्यभोक्तृत्वेनात्यन्तभिन्नयोर्यः प्रत्ययाविशेषः सारूप्यं प्रतिबिम्बद्वारा सुखाद्यारोपो भोगो बुद्धिस्थो दृश्यत्वात्

परार्थः पुरुषस्य भोक्तुः शेषभूतः । तस्माद्भोगात् परार्थाच्चित्प्रतिबिम्बोपसर्जनप्रत्ययरूपाज्जडादन्यश्चित्स्वभावः प्रतिबिम्बः स्वार्थोऽनन्यशेषस्तत्र संयमात् पुरुषस्य साक्षात्कारो भवति। तच्च पुरुषज्ञानमनात्माकारशून्यम् ॥ ३४ ॥

सम्प्रत्यस्य संयमस्य पुरुषसाक्षात्कारात् प्राग्भवाः सिद्धीर्दर्शयति—

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥३५॥

ततः स्वार्थसंयमात् प्रातिभं पूर्वोक्तं सर्वगोचरं ज्ञानं मनोमात्रेण योगजशुक्लधर्मानुगृहीतेन जायते। दिव्यानां शब्दस्पर्शरूपरसगन्धानां ग्राहकानि श्रोत्रादीनि क्रमेण श्रावणवेदनादर्शास्वादवार्तासंज्ञानि जायन्ते । दिव्यशब्दग्राहकं श्रोत्रं यदाऽस्य योगिनो भवति तदा तस्य श्रोत्रस्य श्रावणमिति तान्त्रिकी संज्ञा भवति । एवमन्यदपि ज्ञेयम् ॥ ३५ ॥

ननु तर्ह्ययं योगी कृतकृत्य इत्यत आह—

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३६ ॥

ते प्रातिभादयः समाधौ निःश्रेयसफले रसस्योपसर्गा भवन्ति विघ्ना भवन्ति । अतो मुक्त्यर्थी तानुपक्षेते। न त्वात्मसम्बोधनं विना सिद्धिकोट्यादिभिः कृतकृत्यता भवति । उक्तं च भगवता

एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेति ॥

अत एव वसिष्ठेनाप्युक्तम्—

सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः ।
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते ॥
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इवेति ॥

व्युत्थाने तस्य तु सिद्धयो भवन्तीत्यर्थः ॥ ३६ ॥

तदेवं संयमस्य ज्ञानस्वरूपां विभूतिमात्मदर्शनान्तामुक्त्वा क्रियारूपामाह—

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३७ ॥

सर्वत्र प्राप्तिशीलस्य स्वशरीरमात्रे सङ्कोचेन स्थितिर्बन्धस्तस्य कारणं धर्माधर्मौ। तयोः सँय्यमेन शैथिल्यं भवति। प्रचरत्यनेन चित्तमिति प्रचारो नाडीसङ्घः। तस्यापि सँय्यमेन संवेदनम् अधुनाऽनया नाड्या चित्तं सञ्चरतीति ज्ञानं भवति। तथा प्राणेन्द्रियमार्गनाडीनाम्। तथाच बन्धकरज्जुनाशे मार्गज्ञवत् स्वस्य परवेश्मवच्चित्तस्य परकाये मृते जीविते वा प्रवेशो भवति, चित्तमन्विन्द्रियाणि विशन्ति मधुकरराजमिव मक्षिका इत्यर्थः ॥ ३७ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३८ ॥

द्वयी खल्विन्द्रियाणां प्रवृत्तिः, बाह्याभ्यन्तरी च। आद्या रूपाद्यालोचनरूपा। अन्त्या जीवनयोनिप्रयत्नरूपा सर्वकरणसाधारणी। तस्याः कार्याः पञ्चप्राणादयः। तत्र नासिकाग्राद् आहृदयं स्थितः प्राणः। आहृदयादानाभिस्थितः समानः शुक्रं समं नयतीति। आनाभेरापादतलं स्थितोऽपानो मलमपनयतीति। आनासादाशिरोवृत्तिरुदान उत्क्रान्तिहेतुः सर्वदेहव्यापी व्यानः। तेषु प्राणः श्रेष्ठः। तत्रोदानसंयमेन जयादङ्घिपङ्ककण्टकादिष्वसक्तो योगी लघुत्वादुपरि गच्छति स्वेच्छया च मरणं लभत इत्यर्थः ॥ ३८ ॥

समानजयात् प्रज्वलनम् ॥ ३९ ॥

नाभिनिकटस्याग्निव्यापिनः समानस्य वशीकाराद्ग्नेर्ज्वलनं भवति । येनोज्ज्वलो ज्वलनवद् दृश्यत इत्यर्थः । एवं प्राणादिजयात् स्वेच्छया तत्तत्क्रिया बोध्या इति भावः ॥ ३९ ॥

श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४० ॥

श्रोत्राकाशयोरिति ॥ उपलक्षणमेतच्चक्षुस्तेजसोरपि ज्ञेयम् । तथाच तयोः सम्बन्धेषु संयमाद् दिव्यानीन्द्रियाणि श्रावणवेदनाद्युक्तसंज्ञानि भवन्ति । यैर्दिव्यशब्दादीन् युगपज्जानातीत्यर्थः ॥ ४० ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४१ ॥

कायाकाशयोरिति ॥ तयोः सम्बन्धं जित्वा लघूनि तूलं वा तद्भावेन समाधिना लघुकायो भूत्वा आकाशे जले च विहरति । तत ऊर्णनाभतन्तुषु विहरति । पश्चात् सूर्यरश्मिषु । ततो यथेष्टमाकाशे गच्छतीत्यर्थः ॥ ४१ ॥

बहिरकल्पिता चित्तवृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४२ ॥

देहे अहम्भावे सत्येव मे मनो वहिरस्त्विति कल्पनया मनसो देहाद्वहिर्वृत्तिलाभो भवति । सा कल्पिताख्या धारणा तया देहेऽहम्भावत्यागे सति स्वत एव बहिर्वृत्तिलाभो भवति । सेयमकल्पिता महाविदेहाख्या धारणा । ततः प्रकाशस्वभावस्य चित्तस्य क्लेशकर्माद्यावरणक्षयो भवति । ततः सर्वज्ञत्वलाभ इत्यर्थः ॥ ४२ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥ ४३ ॥

पञ्चानां भूतानां स्थूलं दृश्यमानमवयवसंस्थानं पृथिवीजातिशब्दादिगुणैश्च स्थूलैर्युक्तमित्येकं रूपम्। अथ द्वितीयं तेषां स्वरूपं क्रमेण काठिन्यस्नेहादिलक्षणम्। अथ तृतीयं तेषां रूपं कारणं परमाणवः। तेषां सूक्ष्माणि पञ्चतन्मात्राणि। अथ चतुर्थं तेषां रूपं गुणत्रयम्। तद्धि स्वकार्यं कारणत्वेनान्वेतीत्यन्वयः सामान्यम्। अथ पञ्चमं तेषां भूतानां रूपमर्थवत्त्वं भोगापवर्गज्ञानं सामर्थ्यं गुणनिष्ठं स्वेषु गुणान्वयादागतम्। एवं भूतानां पञ्चरूपेषु कार्यस्वरूपहेतुषु स्थूलादिक्रमेण संयमाद्भूतानि योगिसङ्कल्पानुसारीणि भवन्ति वत्सानुसारिण्य इव गाव इत्यर्थः ॥४३॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मा-

ऽनभिघातश्च ॥ ४४ ॥

ततो भूतजयाद्योगिनोऽणिमाद्यष्टसिद्धयः प्रादुर्भवन्ति। परमाणुतुल्यत्वं लघुतूलपिण्डवल्लघुत्वं भूतनियन्तृत्वमित्याद्यैश्वर्याणि स्थूलसंयमात् सिद्ध्यन्ति। स्वरूपसयमात् प्राकाम्यम्। कायसंपद् वक्ष्यते। तस्य कायस्य भूतधर्मैः काठिन्यादिभिरनभिघातश्च भूतजयात् सिद्ध्यति, येन शिलान्तर्विशति शीतोष्णादयो न बाधन्त इत्यर्थः ॥ ४४ ॥

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥४५॥

चक्षुःप्रियं रूपं लावण्यं सर्वाङ्गसौन्दर्यं बलं वीर्यं वज्रस्येव संहननमवयवव्यूहो यस्य तद्भावो वज्रसंहननत्वं हनूमति प्रसिद्धम् ॥ ४५ ॥

भूतजयानन्तरमिन्द्रियजयोपायमाह—

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमा-

दिन्द्रियजयः ॥ ४६ ॥

शब्दः षड्जादिः, स्पर्शः शीतादिः, रूपं पीतादिः, रसो मधुरादिः, गन्धः सुरभ्यादिरिति । सामान्यविशेषात्मकशब्दादिगोचराः पञ्चवृत्तयः कार्याः, श्रोत्रादीन्द्रियाणां ग्रहणानि । प्रथमं प्रकाशकत्वं स्वरूपं तेषाम् । द्वितीयमस्मिता सात्त्विकाहङ्कारः कारणं तेषाम् । तृतीयमन्वयार्थवत्त्वम् । चतुर्थपञ्चमे रूपे व्याख्याते । तेषु पञ्चेन्द्रियरूपेषु संयमादिन्द्रियजयो भवति ॥४६॥

ततः किं तत्राह—

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥४७॥

मनोवत् कायस्याणुतमोगतिलाभो मनोजवित्वम् । विदेहानां देहानपेक्षाणां दूरस्थावाह्यार्थज्ञानमिन्द्रियाणां विकरणत्वं विकरणभावः प्रधानस्यान्वयस्य चतुर्थस्य जयो जगद्वशित्वमिति सिद्धय इन्द्रियजयाद्भवन्तीत्यर्थः ॥ ४७ ॥

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४८ ॥

वशीकारसंज्ञायां विरक्तौ स्थितस्य बुद्धिसत्त्वात्मनोर्भेदख्यातिर्जायते । तन्मात्रस्य तदा वृत्तिपरस्य योगिनः सर्वेषां भूतानां परिणामिपरिणामभावापन्नानामधिष्ठातृत्वं नियन्तृत्वं ज्ञातृत्वं च सिध्यति । एषा विशोका नाम सिद्धिः । अणिमाद्यास्तु सिद्धयो मधुमतीका भवन्ति । मधुना एकदेशवता इति मधुमतीका इत्यर्थः ॥ ४८ ॥

अधुना विवेकख्यातेर्मुख्यां सिद्धिमाह—

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥

तस्यां विशोकाख्यायां सिद्धौ वैराग्यात्तद्धेतौ विवेक-

ख्यातावपि वैराग्यं परं भवति । ततो दोषाणां बीजं भ्रान्तिसंस्कारस्तस्य क्षये सर्वथा तिरोभावे सति पुरुषस्य स्वरूपप्रतिष्ठत्वं कैवल्यं सिद्ध्यति। इयं संस्कारशेषाख्या सिद्धिः॥४९॥

अत्र विघ्नोत्पत्तौ निरासोपायमाह—

स्थान्युपमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्ट-
प्रसङ्गात् ॥ ५० ॥

तत्तत्स्थानिभिर्महेन्द्रादिभिरुपमन्त्रणं प्रार्थनम् । तस्मिन् क्रियमाणे सति, इहास्यतां कन्यादिभोगो विधीयतामित्यादिके प्रार्थने, तत्र सङ्गः– अहो मम योगप्रभावश्चेतिस्मयश्च न कार्यः, किन्तु दोषं भावयेत् । यतो योगभ्रष्टस्य पुनः संसाररूपस्यानिष्टस्य प्रसङ्गात् । अतः सङ्गस्मययोरकरणं कैवल्यविघ्ननिरासोपाय इत्यर्थः ॥ ५० ॥

पूर्वं बुद्धिप्रतिबिम्बितस्य पुरुषस्य स्वार्थस्य संयमात् तारकविवेकज्ञानमुक्तम् । तत्रोपायान्तरमाह—

क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥

अभेद्यः कालभागः क्षणः । अन्ये मुहूर्तादयः कालभागाः क्षणसमूहरूपा असत्याः । समूहस्यावस्तुत्वात् । तत्राऽयमस्माद् पूर्वक्षणोऽयमुत्तर इति क्रमस्य पौर्वापर्यस्य संयमादतिसूक्ष्माणां भेदसाक्षात्कारो विवेको भवति । इदं क्षणसंयमजं ज्ञानं युगपत् सर्वविषयमित्यग्रे वक्ष्यते ॥ ५१ ॥

सम्प्रति सूक्ष्मं विशेषमाह—

जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः
प्रतिपत्तिः ॥ ५२ ॥

अवच्छेदो निश्चयः । समस्तव्यस्तापहृतामलकादौ जात्यादे

रन्यत्वनिश्चयासम्भवात् क्षणसंयमजविवेकज्ञानादेव इदं प्राग् इदमुत्तरमिति भेदं निश्चिनोतीत्यर्थः ॥ ५२ ॥

तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति
विवेकजं ज्ञानम् ॥ ५३ ॥

क्षणसंयमजं विवेकजं ज्ञानं पुरुषतत्त्वावगाहित्वेन संसारात्तारयतीति तारकसंज्ञम्, अक्रमं युगपदेव सर्वसमूहाऽऽलम्बनं सर्वविषयं सर्वथा सर्वप्रकारकमित्यर्थः ॥ ५३ ॥

तत्तद्भूमिफलान् संयमानुपन्यस्य तादृशविवेकख्यातिनिष्ठाऽस्तु मास्तु वा, सत्त्वपुरुषान्यतासाक्षात्कारमात्रं मुक्तये कल्पत इत्यभिमेत्याह—

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५४ ॥
विभूतिपादः समाप्तः ॥ ३ ॥

सत्त्वपुरुषयोरिति ॥ निरस्तसमस्तमलस्य बुद्धिसत्त्वस्य विवेकख्यात्या संस्कारशेषस्य सर्ववृत्तिशून्यत्वं शुद्धिः । पुरुषस्याऽपि नित्यशुद्धस्य तदाकल्पितभोगशून्यत्वं शुद्धिः । एवं तयोः शुद्धिसाम्ये सति कैवल्यम् । तत्तद्विभूतयस्तु श्रद्धोत्पादनार्थमुपन्यस्ताः । कैवल्यं तु बुद्धिविलक्षणपुरुषसाक्षात्कारमात्रादविद्यानिवृत्तावनागतदुःखानुत्पादरूपं सिध्यतीत्यर्थः ॥ ५४ ॥

इति पातञ्जले सांख्यप्रवचने योगशास्त्रे विभूतिपादस्तृतीयः समाप्तः ॥ ३ ॥

## चतुर्थः पादः ॥ ४ ॥

इदानीं कैवल्यस्वरूपं प्राधान्येन प्रतिपादनीयमिति चतुर्थपाद आरभ्यते। तत्र कैवल्ययोग्यं चित्तं वक्तुकामः पूर्वोक्तसिद्धीनां हेतुभेदात् पञ्चविधत्वमाह—

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

जन्मौषधीति॥ जन्मना पक्ष्यादीनामाकाशगमनादिसिद्धिः। कपिलादीनां च सांसिद्धिकीत्युच्यते। औषधिविशेषसेवायां माण्डव्यादीनां मन्त्रजपेन केषाञ्चिदणिमादिसिद्धिः। तपसा विश्वामित्रादीनां सिद्धिः। एताश्चतस्रः सिद्धयः पूर्वजन्माभ्यस्तयोगजाश्च जन्मादिनिमित्तेन व्यज्यन्ते। अत एव योगाभ्यासे विश्वासेन प्रवृत्तिः। इह सिद्ध्यदर्शनेऽपि जन्मान्तरे साफल्यात्॥१॥

ननु तपःप्रभावादिहैव नन्दीश्वरस्य श्रीगौरीकृपया देवशरीरपरिणामः श्रूयते। तत्र न तावन्नरदेहावयवानामेवोपादानत्वम्। नरदेहमात्रहेतोर्विलक्षणकार्यकारित्वायोगात्। न तावन्नरदेह एव, तस्मिन् सति परिणामान्तरायोगात्। नष्टस्य चाऽहेतुत्वादित्याशङ्क्याह—

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

प्रधानादयः पृथिव्यन्ताः प्रकृतयस्तासां सर्वत्र सत्त्वान्नरादिदेहावयवेषु तासामापूराद् धर्मादिनिमित्तानुरोधेनावयवाऽनुप्रवेशाज्जात्यन्तरपरिणामो युज्यते। यथाऽग्निकणस्य प्रकृत्यनुग्रहाद् वनादौ बहुतृणादिमण्डलव्यापित्वं तद्वदित्यर्थः ॥ २ ॥

ननु प्रकृत्यापूरो धर्मादिनिमित्तमपेक्षते, न वा। न चेत् सर्वत्रापूरापत्तिः। नाद्यः। धर्मादेः प्रवर्तकत्वे पुरुषार्थः प्रवर्तक इति सिद्धान्तविरोधादित्यत आह—

निमित्तमप्रयोजकं प्रकृतीनामावरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

निरीश्वरसांख्ये हि पुरुषार्थ एवानागतः प्रकृतीनां प्रवर्त्तकः। अस्माकं तु सेश्वराणां तदुद्देशेन प्रवर्त्तत इत्युद्देश्यतया पुरुषार्थः प्रवर्त्तक इत्युच्यते । न हि धर्मादिनिमित्तं तत्प्रयोजकं प्रकृतीनां भवति, न कार्येऽपि कारणं प्रवर्त्तत इति । कथं तर्हि ॥ आवरणभेदस्तु ततः क्षेत्रिकवत् ॥यथा क्षेत्रिकः केदारादपां पूरणात् केदारान्तरं प्लावयितुं निम्नं निम्नतरं वा न पाणिनापकर्षति । आवरणं त्वासां भिनत्ति । तस्मिन् भिन्ने स्वयमेवापः केदारान्तरमाप्लावयन्ति ।तथा धर्मः प्रकृतीनामावरणधर्मं भिनत्ति । तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति।यथावा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनुप्रवेशयितुं, किं तर्हि, मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षति । अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति । तथा धर्मो निवृत्तिमात्रे कारणम् । अधर्मस्य शुद्ध्यशुद्ध्योरत्यन्तविरोधात् । न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति । अत्र नन्दीश्वरादय उदाहर्त्तव्याः । विपर्ययेणाप्यधर्मो धर्मं बाधते ततश्चाशुद्धिपरिणामइति।तत्रापि नाहुषाजगरादयउदाहार्याः ॥३॥

ननु यदा योगी बहून् कायान् निर्मिमीते तदा किमेकमनस्कास्ते भवन्ति, अथवाऽनेकमनस्का इति, तत्राह—

निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगप्रभावान्निर्मीयन्त इति निर्माणानि चित्तानि योगिसङ्कल्पाधीनप्रकृत्यापूरात् कायवदहङ्कारात् प्रकृतेर्जायन्त इत्यर्थः ॥ ४ ॥

तर्हि चित्तानां भिन्नाभिप्रायत्वाद्योगिनो भोगासिद्धिरित्यत आह—

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

निर्मितचित्तानां योगी स्वभोगानुकूलप्रवृत्तिविशेषनामकं निर्मिमीते। योगबलात् स्वचित्तं तेषां नायकं भवति । तेन भोगस्तदनुसन्धानं च युज्यते इत्यर्थः ॥ ५ ॥

जन्मौषधिमन्त्रतपःसमाधिजेतिसूत्रे पञ्चविधानि चित्तान्युक्तानि । तेष्वपवर्गभागीयं चित्तं निर्धारयति—

तत्र ध्यानजमनाशयम् ॥ ६ ॥

तत्र यदेव ध्यानजं चित्तं तदेवानाशयं तस्यैव नास्त्याशयो रागादिप्रवृत्तिर्यतः पुण्यपापादिसम्बन्धः क्षीणक्लेशत्वाद्योगिन इत्यर्थः ॥ ६ ॥

योगिनश्चित्तवत् कर्मापि विलक्षणमाह—

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

चतुष्पात् खल्वियं कर्मजातिः । कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाकृष्णा चेति । तत्र कृष्णा दुरात्मनां बहिर्मुखानामेव । शुक्लकृष्णा बहिःसाधनसाध्या । तत्र परपीडानुग्रहद्वारेण कर्माशयो जायते सत्त्वयोगिनां यागादिक्रियारतानामेव। शुक्ला तपःस्वाध्यायध्यानवताम् । सा हि केवले मनसि आयतत्वादबहिःसाधनाऽधीना न परान् पीडयित्वा भवति । इयं तु भगवद्भक्तानाम् । अशुक्लाऽकृष्णा तु संन्यासिनामेव योगज्ञानान्यतररतानां क्षीणक्लेशानां चरमशरीराणाम् । तत्राशुक्लं योगिन एव, फलसंन्यासात् । अकृष्णं चाऽनुपादानात् । इतरेषां तु पूर्वमेव त्रिविधमित्यर्थः ॥ ७ ॥

कर्मणः प्रसङ्गाद्वासनाभिव्यक्तिं फलमाह—

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥

ततस्त्रिविधात् कर्मणो मरणकालानन्तरं जात्यायुर्भोगरूपविपाकदानायाभिव्यक्तानां तस्य विपाकस्यानुगुणानां वासनानामभिव्यक्तिर्भवति, न विरुद्धानामित्यर्थः। देवत्वप्राप्तौ चित्ते प्रसुप्ता एव नरकतिर्यङ्मानुषादिभोगवासना भवन्ति। तासामभिव्यक्तौ दिव्यभोगायोगादिति भावः। नारकमनुष्यतिर्यगादिष्वप्येवमेवानुमेयमिति ॥ ८ ॥

नन्वनन्तरजन्मवासनाः पूर्वेदिनपूर्वजन्मादिवासनावत् कुतो नाभिव्यज्यन्त इतिचेन्न। व्यञ्जकाभावात्। स्वर्गदेशे देवजन्मन्यऽनुभवाचेत्यत आह—

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

जातिदेशेति॥ वृषदंशविपाकादिः स्वव्यञ्जकाञ्जनाभिव्यक्तः स यदि जातिशतेन देशेनात्यन्तदूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदीयाद् द्रागित्येवं पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत। कस्मात्। यतोऽत्यन्तव्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्यमेव। कुतः। स्मृतिसंस्कारयोरेकरूपत्वात्॥ यथानुभवास्तथा संस्काराः। ते च कर्मवासनारूपाः। यथा च वासनास्तथा स्मृतय इति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेश्च पुनः संस्कार इति ते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशाद्व्यज्यन्ते। अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेवेति दिक् ॥९॥

ननु जन्मान्तरितवासना न सन्तीति चार्वाकं मत्याह—

तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥

न केवलं तासां वासनानामानन्तर्यं, किन्त्वनादित्वमपीति भावः। सदा भूयासमित्याशिषो मरणत्रासस्य नित्यत्वात् सर्वजनेष्वव्यभिचारादित्यर्थः ॥ १० ॥

नन्वनादिवासनानां कथमुच्छेदस्तत्राह—

हेतुफलाश्रयालम्बनैःसंगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

नैताः पुरुषवदनादयः, किन्तु प्रवाहानादय इति उच्छेदसम्भवः। तदेव दर्शयति॥ हेतुः अविद्या तत्कार्यं च॥ तथाहि। धर्मात् सुखम्, अधर्माद् दुःखं, सुखाद्रागो दुःखाद् द्वेषः। ततश्च प्रयत्नः। तेन मनसा वाचा कायेन वा परिस्पन्दमानः परमनुगृह्णाति उपहन्ति वा। ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति प्रवृत्तिमदिदं षडरं संसारचक्रं देहायुर्भोगरूपम्। तस्य च प्रतिक्षणमावर्तमानस्याविद्यैव मूलं कारणमित्यर्थः। फलं चित्तमाश्रयः शब्दादिकामविषयः। एतैः संगृहीतत्वादेषां योगजविवेकज्ञानेन निवृत्तौ संसारचक्रकारणानां वासनानामुच्छेदो भवतीत्यर्थः ॥ ११ ॥

ननु सतां संस्काराणां कथं नाश इत्यत आह—

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥

अतीतानागतं धर्मिणि शक्तिरूपेण वर्त्तत एव, यत्परिणामत्रयसंयमाद् योगिनः साक्षात् कुर्वन्ति। ननु तर्हि बन्धस्य सत्त्वादलं तत्त्वज्ञानेनेतिचेन्न। धर्माणामनागताद्यध्वनां भेदाद् वर्त्तमानत्वाध्वनि हि दुःखादिवासनाश्रयं चित्तं साधिकारं

भोग्यमापन्नं बन्ध इति कथ्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रकृत्यात्मना पुरुषार्थस्य कृतत्वान्न पुनरावर्त्तत इति भावः ॥ १२ ॥

अतीतानागतं स्वरूपतोऽस्तीत्युक्तम् । किं तत्स्वरूपमित्यत आह—

ते व्यक्तसूक्ष्मा, गुणात्मानः ॥ १३ ॥

व्यक्ता वर्त्तमानाध्वानः, सूक्ष्मा अतीताध्वानः । ते महदादयो घटान्ता गुणात्मानः सत्त्वरजस्तमःस्वरूपा इत्यर्थः । अत एवोक्तं भाष्यकृता व्यासदेवेन— सर्वमिदं गुणानां सन्निवेशविशेषमात्रमिति । परमार्थतो गुणात्मानः । तथाच शास्त्राऽनुशासनम् ॥

गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकमिति ॥ ॥ १३ ॥

ननु प्रख्याक्रियास्थितिस्वभावस्य गुणत्रयस्य परिणामित्वे परिणामानामेकत्वं न स्यात् । न हि मृत्त्वादीनामेकः परिणामो दृष्ट इत्यत आह—

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

बहूनामेकः परिणामो दृष्टो लवणादिवत् । तथाच मृदादीनामङ्गाङ्गित्वाभावान्न परिणामैकत्वम् । गुणानां तु तथाऽस्तीति वस्तुनो महदादेस्तत्त्वमेकं युज्यते इत्यर्थः ॥ १४ ॥

चित्तमतिरिक्तं ज्ञानान्नास्ति । वासनाविचित्रं द्रव्याद्यात्मना भातीति क्षणिकविज्ञानवादिनं बौद्धं प्रत्याह—

वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः ॥ १५ ॥

तयोश्चित्तवस्तुनोर्विविक्तः पन्थाः, भिन्नो मार्गः । विज्ञाना-

ऽर्थयोर्भेद इति यावत् । कुतः । वस्तुनः स्त्रीपिण्डादेः साम्येऽपि चित्ताना भेदात्। यदैकस्यां नार्या पत्युः सुखविज्ञानम् अन्यस्य रागिणो दुःखविज्ञानमलाभेन।एवं कस्यचिन्मोह इत्यादिस्त्रीपुरुष-साधारणं व्याख्येयम् ॥ १५ ॥

यस्तु विज्ञानादन्योऽर्थोऽस्ति जडत्वाद्विज्ञानाऽग्राह्यः प्राति-भासिक इति स वक्तव्यः । किमेकचित्तं कार्यं सर्वम्, उता-ऽनेकचैत्रमैत्रादिचित्तकार्यमिति । तत्र नाद्य इत्याह—

न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥

यद्येकचित्तकार्यं घटादि वस्तु तदा तस्मिंश्चित्ते अन्यत्र पटादिषु व्यग्रे तद्वस्त्वप्रमाणकं स्यात् । न चेष्टापत्तिः । अन्येन दृश्यमानत्वात् । नाप्यनेकचित्ततन्त्रम्। प्रातिभासिकस्य स्वप्नव-देकचित्ततन्त्रत्वनियमात् ॥ १६ ॥

ननु सिद्धान्ते विभुनश्चित्तस्य सर्वसम्बन्धत्वात् सदा सर्वं वस्तु ज्ञायेतेत्यत आह—

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताऽज्ञातम्॥१७॥

यदा कर्मणाऽभिव्यक्तानामिन्द्रियद्वारा मनसा सम्बन्धस्तदा तस्मिन्नर्थे चित्तं स्वनिष्ठप्रतिबिम्बरूपा स्फूर्तिं धत्ते, नान्यस्मि-न्निति वस्तु ज्ञाताऽज्ञातं भवतीत्यर्थः ॥ १७ ॥

ननु तर्ह्यात्मनोऽपि परिणामित्वमित्यत आह—

सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्या-ऽपरिणामित्वात् ॥ १८ ॥

पुरुषस्य हि क्षित्यादिसर्ववृत्तिकं चित्तं विषयः । स यथा

चित्तेन स्वसत्ताकाले वृत्तिरूपपरिणामं विना न गृह्यते, तथा पुरुषेणापि स्वसत्ताकाले न ज्ञायते चेत्तदा चित्तवत् परिणामी स्यात् पुरुषः । वृत्तिपरिणामं तत्तदाकारमपेक्ष्य तदज्ञातृत्वापातात्। तथाच किं परिणामिद्वयेनेति चित्तादन्यः पुरुषो न स्यात्। सदैव तु स्वसत्ताकाले ज्ञायमानाश्चित्तवृत्तयो भोग्याः शब्दाद्याकारास्तस्य प्रभोर्भोक्तुरपरिणामित्वं ज्ञापयन्ति साक्षिणोऽपरिणामित्वादेव स्वयं सर्वदा ज्ञाता भवन्ति, नान्यथेत्यर्थः ॥ १८॥

ननु चित्तमेव क्षणिकं स्वप्रकाशं स्वस्वार्थयोर्भासकमस्तु. किमन्तर्गडुना साक्षिणेत्यत आह—

न तत् स्वाभासं दृश्यत्वात् ॥ १९ ॥

दुःख्यहं क्रुद्धोऽहं शान्तं मे मन इति दृश्यत्वाच्चित्तं स्वाभासं स्वप्रकाशं न प्रभवतीत्यर्थः ॥ १९ ॥

एकसमये चोभयानवधारणम् ॥ २० ॥

क्षणिकवादिन एकस्मिन्नेव समये चित्तचैत्ययोरवधारणं न संभवतीत्यर्थः ॥ २० ॥

ननु माऽस्तु स्वप्रकाशं चित्तान्तरेण दृश्यतां, किं साक्षिणेत्यत आह—

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः
स्मृतिसंकरश्च ॥ २१ ॥

यदि नीलाकारं चित्तं चित्तान्तरेण दृश्यं तदा तदपि बुद्धिरूपं चित्तमन्यया, साप्यन्ययेत्यनवस्थापातात्। न च द्वित्रा एव ग्राह्या इति नानवस्थेति वाच्यम् । ग्राहकचित्तानिश्चये ग्राह्यचित्तानिश्चयात् । गेहे घटो दृष्टो न वेति संशये, न दृष्ट इति व्यतिरेकनिश्चये चार्थाप्रत्ययात्।ज्ञानचित्तानिश्चयेऽर्थनिश्चयोऽहेतु-

त्वात्। तत्तदनन्तचित्तानामनुभवे चानन्तचित्तस्मृतीनां संकरश्च प्राप्नोति। स्मृत्यानन्त्यादशक्यग्रहत्वाद्ग्राहकानिश्चयान्नीलस्मृतिरियं, न चित्तस्मृतिरिति विभागो न स्यादित्यर्थः ॥ २१ ॥

ननु कूटस्थस्य साक्षिणश्चित्तेन क्रियापूर्वकसंबन्धभावात्तेन कथं संवेद्यमित्यत आह—

चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

घटादिवच्च चितेर्बुद्धौ न प्रतिसंक्रमः। अपरिणामित्वात्। किन्तु सूर्यस्य जले प्रतिविम्बवच्चित्ते बुद्धौ प्रतिविम्बिते सति बुद्धौ चिदाकारतापत्तौ स्वस्य भोग्याया बुद्धेः संवेदनं भवति। चिच्छायावाह्यत्वसंबन्धेन चिदुपरक्तत्वं चित्ते चिद्विषयत्वमित्यर्थः। अप्रतिसंक्रमायाश्चितेः सान्निध्यात्तस्याश्चितेराकारश्छाया यत्र तद्भावापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनमिति योजना ॥ २२ ॥

ननु यदि चित्तातिरिक्त आत्मा कथं तर्हि चित्तमेवात्मेति भ्रमो लोकविशेषाणामित्याशङ्क्य चित्तस्य सर्वार्थग्रहणसामर्थ्यमेव बीजमाह—

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

द्रष्टा पुरुषः, दृश्यं प्रपञ्चोऽचेतनं, तत्सर्वं चेतनाचेतनमर्थो विषयो यस्य तत्सर्वार्थं, तत्सान्निध्यात् तत्र चिद्रूपतामिव प्राप्तम् द्रष्टृचिदुपरक्तं द्रष्टृविषयं भवति। इन्द्रियद्वारा दृश्योपरक्तं तदाकारं भवति। तथाच भोग्यशब्दाद्याकारं सुखदुःखादिपरिणामलक्षणभोगात्मकं दृश्यमपि चित्तं चित्प्रतिविम्बाभेदादात्मेति भ्रम इत्यर्थः ॥ २३ ॥

चित्तादन्यो भोक्तास्तीत्याह—

तदसंख्येयवासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥

यद्यपि क्लेशादिवासनाभिरनन्ताभिश्चित्तं सुखाद्याश्रयतया भोक्तृकल्पं, तथापि परस्यात्मनो भोगापवर्गौ साधयतीति परार्थम् । भोग्यमेव, न भोक्तेति यावत् । कुतः । संहत्य देहेन्द्रियादिसहकारिभिर्मिलित्वा भोगादिकार्यकारित्वात् । यन्मिलित्वा कार्यकारि तत् परार्थमिति भावः ॥ २४ ॥

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥

विशेषदर्शिनः प्रकृतिपुरुषसाक्षात्कारवत आत्मभावे आत्मस्वरूपे भावना जिज्ञासा, कोऽहमासं कथं भविष्यामीत्येवंरूपा, तस्या भयशोकादिनिवृत्तिहेतोर्निवृत्तिसाध्यो जीवन्मुक्तिलक्षणो मोक्षो भवतीत्यर्थः ॥ २५ ॥

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

तदा उक्तसाक्षात्कारदशायां विवेकनिम्नं सत्त्वपुरुषान्यताख्यातिप्रवहनशीलम्, अत एव विषयोन्मुखत्वपरित्यागेन कैवल्यप्राग्भारं कैवल्याभिमुखं चित्तं भवतीत्यर्थः ॥ २६ ॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

तच्छिद्रेषु व्युत्थानावस्थासु प्रत्ययान्तराणि देवोऽहं मनुष्योऽहमित्याद्यात्मकानि उत्पद्यन्ते । कुतः ॥ पूर्वसंस्कारेभ्यः ॥ क्षीणमायबीजेभ्यः पूर्वसंस्कारेभ्य इत्यर्थः ॥ तथाचारब्धकर्मणां भोगेनैव नाशो,नान्यथेतिभावः। अत एव भगवान् बादरायणोऽप्याह— भोगेन त्वितरे क्षपयित्वेति । श्रुतिरपि,तस्य तावदेव चिरमित्यादिः स्पष्टैव । स्मृतिरपि, सदृशं चेष्टते इत्यादिरूपा प्रमाणमत्र बोध्या ॥ २७ ॥

हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

एषां संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं पूर्वोपायैः क्लेशवदुक्तमित्यर्थः ॥ २८ ॥

प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्याते-
र्धर्ममेघः समाधिः ॥ २९ ॥

प्रसंख्यानं विवेकसाक्षात्कारः। तत्रापि अकुसीदस्य तत्प्रयुक्तसिद्धिप्रार्थनाशून्यस्य सर्वथा विवेकख्यातेः संस्कारबीजाऽभावेनानन्तर्येण प्रत्ययोत्पत्तेर्धर्ममेघः समाधिधर्ममेघनाम्नाऽसंप्रज्ञातयोगस्य परा काष्ठा भवतीत्यर्थः ॥ २९ ॥

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

तत उक्तसाक्षात्कारात् क्लेशाः संस्कारा अविद्यादयस्तेषाम। एवं कर्मप्रारब्धभिन्नं तस्य च भोगं विनैव नाश इत्यर्थः। तदुक्तं,जीवन्नेव हि विद्वान् हर्षामर्षाभ्यां विमुक्तो भवतीति॥३०॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्या-
ज्ज्ञेयमल्पम् ॥ ३१ ॥

तदा विवेकख्यातिरूपजीवन्मुक्तावस्थायां सर्वावरणमलाऽपेतस्य क्लेशकर्मणोर्ज्ञानावरकमलयोरजस्तमसोरपगमे तस्य ज्ञानस्यानन्त्यात् कथितज्ञानस्याभिभावकतमोनिवृत्त्या विभुत्वाज्ज्ञेयं प्रकाशमानम् अल्पं तदपेक्षया भवतीत्यर्थः ॥ ३१ ॥

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

ततो धर्ममेघोदयात् क्लेशकर्मादिनिवृत्त्या वैराग्येण संसारः पुनर्न भवतीत्यर्थः ॥ ३२ ॥

तत्र क्रमं सोपपत्तिकमाह—

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥

क्रम इति लक्ष्यनिर्देशः । तत्र क्षणप्रतियोगीत्यन्तं हि स्वरूपनिर्देशः । परिणामापरान्तेति च प्रमाणनिर्देशः । तत्र क्षणप्रतियोगी क्षणस्यावसरस्य प्रतियोगी विरोधी क्षणेनाप्यन्तरित इति यावत् । एवंरूपः पूर्वापरीभावः क्रम इति निष्कर्षः । परिणामश्च पूर्वरूपापायो रूपान्तरोत्पत्तिर्दुग्धस्य दध्यात्मकत्वमित्युक्तमाकरे । ईदृशे च क्रमे मानमाह ॥ परिणामापरान्तनिर्ग्राह्य इति ॥ परिणामस्यापरान्तेन चरमावस्थया निर्ग्राह्योऽनवच्छिन्नपरिणामधारयाऽनुमीयत इत्यर्थः । अधिकं व्यक्तमाकरे ॥३३॥

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

इति पातञ्जले सांख्यप्रवचने योगशास्त्रे कैवल्यपादश्चतुर्थः समाप्तः ॥ ४ ॥

कृतकर्तव्यतया पुरुषार्थशून्यानां गुणानां लिङ्गशरीराद्यात्मकानां यः प्रतिप्रसवःस्वकारणेऽत्यन्तलयोऽनागतावस्थाशून्यत्वमिति यावत्।सा बुद्धेः कैवल्यम् । एतदेव च प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते। तेन सह पुरुषेण सह असंयोगात्।एवं चितिशक्तिः स्वरूपप्रतिष्ठा वा बुद्धिसत्त्वोपाधिरूपशून्यता वा कैवल्यम् । स्वरूपतः स्वच्छस्यापि स्फटिकस्य जपाकुसुमाद्यपाये स्वरूपप्रतिष्ठावत्।तथाच निरुपाधिकतया सार्वदिकी स्थितिरेव कैवल्यं, साध्यता चोपाधिनिवृत्तेरेवेति भावः ॥ ३४ ॥

तीर्थराजे प्रयागेऽस्मिन् योगसूत्रार्थवर्णनम् ॥
नारायणो भिक्षुवर्यो व्यातेने हरितुष्टये ॥ १ ॥

इति श्रीरामगोविन्दतीर्थशिष्यश्रीनारायणतीर्थविरचिता पातञ्जलसूत्रव्याख्या समाप्ता ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥

पातञ्जलयोगसूत्रवृत्तिः ।

# योगसिद्धान्तचन्द्रिका ।

श्रीनारायणतीर्थविनिर्मिता ।

---

सत्यं ज्ञानमनन्तमद्वयसुखं प्राप्नोति वेदेषु यत्
प्रोक्तं विष्णुशिवादिभिश्च बहुभी रूपैर्मतं वादिभिः ॥
यन्नानाविधियः सदा गुरुकृपासत्प्रेमयोगेन य-
ल्लभ्यं तं समुपास्महे हृदि सदा कृष्णं जगद्देशिकम् ॥ १ ॥
योगं प्राह पितामहोऽथ भगवान् शेषः स्वयं सँय्यमैः
सूत्रैर्भाष्यमिषेण सर्वविदितो व्यासः समस्तं परम् ॥
तद्भाष्यं विशदीचकार मतिमान् मिश्रोऽथ भिक्षुस्तथा
दुर्बोधं हि तथापि मूढमतिभिर्गूढं रहस्यं यतः ॥ २ ॥
अत्र सूत्रेषु गूढार्थद्योतिकां तनुते पराम् ॥
वृत्तिं नारायणो भिक्षुः सुगमां हरितुष्टये ॥ ३ ॥
स्वातन्त्र्यसत्यत्वसुखं प्रधाने
सत्यश्च चिद्भेदमभेदवाक्यैः ॥
व्यासो निराचष्ट न भावनाख्यं
योगं स्वयं निर्मितब्रह्मसूत्रैः ॥ ४ ॥
अपिचाऽऽत्मप्रदं योगं व्याकरोन्मतिमान्मुनिः ॥
भाष्यादिषु ततस्तत्राप्याचार्यप्रमुखैर्मतः ॥ ५ ॥
मतो योगो भगवता गीतायामधिकोऽन्यतः ॥
कृतः शुकादिभिस्तस्मादत्र सन्तोऽतिसादराः ॥ ६ ॥

ब्रह्मविदाप्नोति परम्, ब्रह्मविद् ब्रह्मैव भवति, तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, तरति शोकमात्मविदित्यादिश्रुतिसिद्धपरमपुरुषार्थसाधनतानन्दात्मसाक्षात्कारसाधनतया श्रवणमनननिदिध्यासनादीनि, आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो

निदिध्यासितव्य इत्यादिनाऽऽम्नातानि । तत्र निदिध्यासनं प्रधानम्। तत्सहकृतादेव मनसोऽलौकिकाऽबाधितात्मगोचरप्रमासम्भवात्, सर्वविज्ञानादिरूपफलसंपादाच्च । निदिध्यासनञ्चैकताननतादिरूपो राजयोगापरपर्यायः समाधिः । तत्साधनं तु क्रियायोगः, चर्यायोगः, कर्मयोगो, हठयोगो, मन्त्रयोगो, ज्ञानयोगः, अद्वैतयोगो, लक्ष्ययोगो, ब्रह्मयोगः, शिवयोगः, सिद्धियोगो, वासनायोगो, लययोगो, ध्यानयोग , प्रेमभक्तियोगश्च । तदेतत् सर्वं सामान्यविशेषभावेनाष्टाङ्गयोगेन क्रोडीकृतमिति मनसि निधाय साष्टाङ्गं सफलं योगं समाधिसाधनविभूतिकैवल्यार्थैश्चतुर्भिः पादैर्व्युत्पादयिष्यन् प्रेक्षावत्प्रवृत्त्यै विषयप्रयोजनाधिकारिसम्बन्धान् दर्शयन् प्रथमं शास्त्रस्यारम्भं प्रतिजानीते भगवान् पतञ्जलिः—

## अथ योगानुशासनम् ॥ १ ॥

अथ शब्द आरम्भार्थः श्रुतिमात्रेण मङ्गलार्थश्च, न प्रश्नाद्यानन्तर्यार्थः । शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायेन शब्दानुपस्थितानन्तर्यार्थकस्यानौचित्यात् । शिष्यप्रश्नगुर्वाज्ञाश्रद्धादीनामविशेषेण विद्याप्रयोजकतया कस्यानन्तर्ये तात्पर्यमित्यवधारयितुमऽशक्यत्वाच्च ॥

योगः समाधिः । अनुशासनं हिरण्यगर्भोक्तेरनु पश्चाच्छिष्यते व्युत्पाद्यते लक्षणभेदफलसाधनैरनेनेत्यनुशासनं, योगस्यानुशासनं योगानुशासनम् । योगप्रतिपादकं शास्त्रमारभ्यत इत्यर्थः । अत्र ससाधनः सफलो योगः प्रतिपाद्यतया शास्त्रस्याऽभिधेयः । प्रतिपाद्ययोगद्वारा कैवल्यं फलम्। तत्कामश्चाधिकारी । शास्त्रफलयोः प्रयोज्यप्रयोजकभावः । शास्त्राभिधेययोस्तु प्रतिपाद्यप्रतिपादकभावः । अभिधेयस्य योगस्य कैवल्यस्य च साध्यसाधनभावः सम्बन्ध इति दिक् ॥ १ ॥

सपरिकरो योगः प्रतिपाद्यत इति प्रतिज्ञातम् । तत्र योगलक्षणं योगशब्दप्रवृत्तिनिमित्तं च निर्दिष्टपञ्चदशप्रकारयोगसाधनश्चावृत्तमाह—

## योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

इति भाष्यम् ॥ तत्र चित्तस्य महदहङ्कारमनोभेदेन त्रिविधा- ऽन्तःकरणस्य वृत्तयो दीपस्य शिखा इवावस्थापरिणामरूपा बाह्या, आभ्यन्तराश्च। तासां निरोध उपशमो निरिन्धनाग्निवत् स्वकारणे लयः। तदा निरोधकाले द्रष्टुः प्रमातुरहमर्थस्यान्तःकरणाऽवच्छिन्नस्य स्वरूपे विशेष्ये केवलचैतन्य आत्मन्यवस्थानं विषयतयाऽवस्थितिर्विद्यमानतेत्यर्थः। विषयता च व्यापारानुबन्धिनी। व्यापारश्च वृत्तिरेव। योगी यामहमेतावन्तं कालं समाहितोऽभूवमिति स्मरणेन व्युत्थानेऽनुमिनोति। इत्थञ्च वृत्त्यन्तरनिरोधपूर्वकात्मगोचरधारावाहिकनिर्विकल्पकवृत्तिर्योग इति लक्षणं सिद्धम्। मय्येकचित्ततायोगो वृत्त्यन्तरनिरोधत इति कूर्मपुराणादौ शिवोक्तेः। यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यतीति गीतायां भगवदुक्तेश्च। यद्यपि द्रष्टृगोचराया इव दृश्यगोचराया अपि तादृशवृत्तेः समाधित्वं वक्ष्यति सूत्रकारस्तथाप्यत्र मयीत्यादि प्रकृताभिप्रायम्। तन्नोपदेशिकवृत्तिवारणाय विशेषणम्। अभावस्य निर्विषयत्वेन संस्काराऽजनकत्वाद् योगस्य च संस्कारजनकत्वात् तथैवाग्रे वक्ष्यमाणत्वाद्विशेष्यम्। तत्र संप्रज्ञातासाधारण्याय निर्विकल्पकेति। सूत्रद्वयेन विशेषणविशेष्ययोर्द्वयोरुक्तिस्तु प्रत्येकस्यापि फलभेदज्ञापनाय। अत एव पादभेदेन विशेषणांशफलं विभूतिस्तृतीयपादे, विशेष्यांशफलं च कैवल्यं चतुर्थपादे वक्ष्यति सूत्रकार. ॥

अथवा शिवलक्षणा स्वस्वरूपाभिव्यक्तिर्महायोगो निरालम्ब.। तत्साधनं त्वभावयोग. समाधिपदाभिधेयो निराभास.। तत्र प्रथमस्य लक्षणं तदेति। द्वितीयस्तु, चित्तवृत्तीति॥ योगस्तु द्विविधो ज्ञेयो ह्यभाव. प्रथमो मतः * अपरस्तु महायोगः सर्वयोगोत्तमोत्तम॥ शून्यं सर्वं निराभासं स्वरूपं यत्र चिन्त्यते। अभावयोग स प्रोक्तो येनात्मानं प्रपश्यति॥ यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम्। मयैक्यं स महायोगो भाषित परम स्वयमित्यादिस्मृतिभिरपि तथा ज्ञापनात्। अत्र संप्रज्ञातप्राणनिरोधादेः साधनकोटावेव निवेशात् संप्रज्ञाते सात्त्विकविशिष्टवृत्तिसत्त्वेऽपि, योग प्राणनिरोध इत्यनुक्तावपि च न हानिः। राजयोगविजिज्ञासाविषयैव लक्षणसूत्रप्रवृत्ते। ननु संप्रज्ञातेऽस्मिन् ध्येयमात्रगोचरवृत्तिस्वीकारः, सर्ववृत्तिनिरोधे त्वसंप्रज्ञात इति भाष्येण विरुद्धयत इति चेन्न। संप्रज्ञातं

प्रकारस्य, तामपि यथार्थां निरुणद्धीत्युत्तरग्रन्थेन विशिष्टवृत्तिमात्रनि-
रोधस्यैव तदर्थत्वज्ञापनात्। एतेन तत्र ध्येयवृत्तिसत्त्वे सर्ववृत्ति-
निरोधासिद्धिः। असत्त्वे तु समाधिशब्दार्थहानिः। मय्येकाचित्तते-
त्याद्युदाहृतस्मृत्या ध्येयमात्राकारवृत्तेरेव योगत्वकथनादित्याद्याश-
ङ्कापि समाहिता। सर्वपदमपठता सूत्रकारेणापि तज्ज्ञापनात्।
असंप्रज्ञातशब्दादिभिरेव, न तत्र किञ्चित् सम्यगर्थरूपादिना प्रज्ञायत
इत्यादिव्युत्पत्त्या तदर्थलाभाच्च। अत एव तावन्मनो निरोद्धव्यं
हृदि यावत्क्षयम् * एतज्ज्ञानञ्च मोक्षञ्च शेषोऽन्यो ग्रन्थविस्तर
इत्यादिश्रुतिषु, यत्रोपरमते चित्तं निरुद्धं योगसेवयेत्यादिस्मृतिषु
च मनोनिरोधस्यैवोक्तत्वेऽपि नात्र तथोक्तम्। तत्रापि विवक्षिताविवे-
केन मनोनिरोधस्य विशिष्टवृत्तिनिरोधात्मकत्वलाभादिति दिक्॥

अथवा समाधित्वेन संप्रज्ञातस्याप्यग्रे वक्ष्यमाणत्वाद् राज-
योगवत् संप्रज्ञातोऽपि प्रतिज्ञासूत्रे योगशब्दाभिधेयः। तथाच, युज
समाधावित्यनुशासनानुभयविधसमाधेः स्वरूपसाधनभेदफलप्रति-
पादकशास्त्रमारभ्यत इति प्रतिज्ञासूत्रार्थः। तदुभयसाधारणं लक्षण-
माह॥ योगश्चित्तवृत्तिनिरोध इति॥

तत्र चित्तस्य राजसतामसवृत्तीनां निरोध उपशमः संप्रज्ञातः। सर्ववृ-
त्तीनां निरोधोऽसंप्रज्ञातः।यदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भ-
वते वीतशोकः॥ यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्ये-
त्॥ अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥ यदा
पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह * बुद्धिश्च न विचेष्टेत तामाहुः
परमां गतिम्॥ अप्रमत्तस्तदा भवति, योगो हि प्रभवाप्ययौ॥ मन
एव मनुष्याणां कारणं बन्धमोक्षयोः * बन्धाय विषयासक्तं मोक्षो
निर्विषयं स्मृतमित्यादिस्मृतेरित्यर्थः। सर्ववृत्तिशून्यरूपासंप्रज्ञात-
स्य तु समाध्यङ्गिनो योगस्य मधुमतीमधुप्रतीकाविशोकासंस्कारा-
ख्यासु भूमिषु सतीषु लब्धस्य मणिमन्त्रादिन्यायेन कैवल्यहेतुत्वं
स्वजन्याहष्टद्वारा साक्षात्कारहेतुत्वम्॥

अथवा निरोधः— चित्तवृत्तयो निरुद्ध्यन्तेऽस्मिन्निति व्युत्प-
त्त्या, वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि * एकीकृत्य विमुच्येत
योगयुक्तः स उच्यते इत्यादिस्मृतेश्च सर्वानर्थविरोध्यखण्डाकाराकार-
वृत्तिपर्यवसायी बोध्यः। विरोधिपदार्थस्यैव नाशनादात्मरूपत्वात्

प्रागभावाद्वौ तथा दर्शनात्। अत एव वृत्तिविशेषरूपाभ्यां सम्प्रज्ञाताऽसंप्रज्ञाताभ्यां योगस्य विभजनमप्यग्रे संगच्छते। अत एव, न योगस्य वैयर्थ्यमपि। तादृशवृत्तेर्भावनासहकृतमनःप्रमाणजन्यत्वेनापरोक्षतयाऽज्ञानोच्छेदक्षमत्वादित्यग्रे स्फुटीभविष्यति। द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानश्च राघव * योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्॥ असाध्यः कस्यचिद् योगः कस्यचित् तत्त्वनिश्चयः। प्रकारौ द्वौ ततो देवो जगाद परमः शिव इत्यादिना वासिष्ठे योगज्ञानयोः पृथक्त्वकथनं तु योगवृत्तेः शास्त्रजवृत्त्या विकल्पार्थम्। बहिर्मुखानां वाक्यतोऽखण्डार्थबोधस्यापि दुर्लभत्वादिति संक्षेपः॥

सोऽयं योगो भूमिविशेष एवाविर्भवति, न सर्वासु भूमिषु। तथाहि। चित्तस्य त्रिगुणात्मकत्वात् क्षिप्तमूढविक्षिप्तैकाग्रनिरुद्धाख्याः पञ्चभूमयोऽवस्थाविशेषा भवन्ति। तत्र न तिसृणामुपयोगः। बहिःप्रवृत्तिभूयस्त्वात्। अपि तु द्वयोरेवान्त्ययोः। तत्र क्षिप्तं रजस उद्रेकादस्थिरं बहिर्मुखतया सुखदुःखादिविषयेषु व्यवहितेषु विप्रकृष्टेषु संनिहितेषु च प्रेरितं भवति। तच्च सदैव दैत्यदानवादीनाम्। मूढं, तमस उद्रेकात् कृत्याऽकृत्यविभागमुल्लङ्घ्य क्रोधादिभिर्विरुद्धकृत्येष्वेव निरन्तरं भवति। तच्च सदैव रक्षःपिशाचादीनाम्। विक्षिप्तं सत्त्वोद्रेकाद्रजोविशिष्टं दुःखसाधनं परिहृत्य सुखसाधनेष्वेव शब्दादिषु प्रवृत्तं भवति। तच्च सदैव देवानाम्। एकाग्रं तु रजसोऽप्यभावेन शुद्धसत्त्वोद्रेकादात्ममात्रगोचरं सगुणब्रह्मगोचरं वा सविकल्पकसात्त्विकवृत्तिविशिष्टम्। तच्च सदैव भगवद्भक्तानाम्। देवासुरगन्धर्वरक्षोमनुष्यप्रभृतीनां निरुद्धम्। तच्चापि निरोधविशिष्टं योगिनामेव भवति। वर्त्तमानाध्वनि स्थितानां वृत्तीनामध्वन्तातीताध्वनि प्रवेशलक्षणनिरोधस्यानात्माकारसर्ववृत्तिनिरोधेच्छासहकृतसम्प्रज्ञातादिपाटवैकसाध्यस्यान्यत्रासम्भवात्। तस्मान्निरोध एवाऽसम्प्रज्ञातः॥ २॥

निरोधवांस्तु योगी। द्विविधः— युक्तोऽयुक्तश्च। तत्र युक्तः समाहितमनाः। यः केवलसमाधिनिष्ठो मोक्षमभिवाञ्छति। अयुक्तस्त्वसमाहितमनाः प्रारब्धदोषात् प्रतिभादिसिद्ध्यादिष्वपि वाञ्छन्नुपहतसमाधिः। तत्रायुक्तोऽनेकार्थप्रवृत्त्येन सोपाधिरपि। युक्तो योगे स्थितः किंस्वरूपः। किं सांवधपातञ्जलादिसम्मतश्चित्त-

तत्कार्यसाक्षिमात्ररूपः ? उत किं बोधरूपोऽपि सँस्तदानीं सविषयत्वनिर्वाहकवृत्त्याद्युपाधेरभावान्निर्विषय एव । अथवा तार्किकवैशेषिकप्रभाकरसम्मतः सुषुप्त्यादाविव सामग्र्यभावेन विषयमगृह्णंस्तदानीमपि जड एव । काष्ठादिवन्निर्विषयस्य प्रकाशत्वायोगात् । उताऽऽत्मनः संयोगविशेषादात्ममात्रद्रष्टा चेतनः । अथवा शून्यवादिविज्ञानवादिसम्मतो दशाक्षयं दीपादिवद् विषयनिरूप्यो विषयोपरमान्न पश्यति ? उत प्रवृत्तिविज्ञानोपरमेऽपि सुषुप्ताविवाऽऽलयविज्ञानसन्ततिरूपस्तिष्ठतीत्याशङ्क्य तदानीमपि विद्यमानचित्तबोधरूपस्य सर्वथा निर्विषयत्वायोगेन प्रथमद्वितीयपक्षस्य बाधात् तार्किकोक्तयोस्तृतीयचतुर्थयोस्तु, योऽयं विज्ञानमय इत्यादिश्रुत्या तन्मते विशेषगुणयोगेनैवात्मनः प्रत्यक्षस्याङ्गीकारादात्ममात्रदर्शनरूपनिर्विकल्पकसमाधिबोधेन च बाधात् । बौद्धाभिमतयोः पञ्चमषष्ठपक्षयोस्तु, अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मेत्यादिश्रुत्याऽऽत्मन क्षणिकत्वायोगेन च बाधात् स्वाभिप्रेतं प्रथमपक्षमेव सिद्धान्तयति ॥ तदा द्रष्टुः स्वरूपेऽवस्थानमिति ॥ तदा सकलचित्तवृत्तिनिरोधकाले द्रष्टुः, चित्ततद्वृत्तिनिरोधपरिणामसाक्षिणश्चितिशक्तेः पुरुषस्य स्वरूपे तत्त्वेन चित्तादप्यनवगाहितया निर्विषये निरुपप्लवे स्वप्रकाशानावृतसच्चिद्रूपे अवस्थानं कुसुमापाये स्फटिकस्याऽलोहिते स्वस्वरूप इव कलशाद्यपाये चित्ताद्यसंक्रमेण कर्तृत्वाद्यभिमाननिवृत्त्याऽभेदेनावस्थितिरित्यर्थः । स्वभावात् स कार्यचित्तरोधात्माऽपि सन् निरुपाधिस्वरूपात्मना तिष्ठतीति यावत् । इत्थं च चितिशक्तेः पुरुषस्य निर्विषयस्वप्रकाशसच्चिद्रूपतैव स्वरूपम् । विषयग्राहिता त्वौपाधिकी । तस्याश्च निरोधकालेऽसत्त्वेऽपि न हानिः । पाकनिवृत्तौ पाचकस्येव, तदुपलक्षितसाक्षिस्वरूपस्याबाधात् । तस्मात् स्वतो निरुपाधिसत्स्वप्रकाशरूपस्याप्यात्मन उपाधिभिरौपाधिकस्वरूपस्य तत्र निरोधसमाधिना संस्कारसहितचित्ताशेषवृत्तिनिरोधे शान्तघोरमूढावस्थानिवृत्तौ हि, जीवन्नेव विद्वान् हर्षामर्षाभ्यां विमुच्यत इत्यादिश्रुत्युक्ता निर्विकारस्वरूपाऽवस्थितिरूपा जीवन्मुक्तिर्भवति । परममुक्तिस्तु वक्ष्यमाणप्रज्ञाकाष्ठायां प्रान्तभोगान्ते प्रतिप्रसवेनौपाधिकरूपात्यन्तिकनिवृत्तावात्यन्तिकस्वरूपावस्थानमिति बोध्यम् । व्यक्तीभविष्यति चेदमुपरिष्टादिति दिक् ॥ ३ ॥

ननु तर्हि व्युत्थाने स्वभावात् प्रच्युतिः स्यात्। आम्लेन दुग्धस्य दधिभाववच्चित्तादिभिरनौपाधिकस्यौपाधिकभावजननात् । तत्राह—

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

वृत्तीति इतरत्र व्युत्थाने वृत्तिसारूप्याऽश्रितेन सह द्रष्टुर्वृत्तौ सारूप्यमवैलक्षण्यमित्यर्थः। शान्तघोरमूढाश्चित्तस्य वृत्तयः क्षणभङ्गुराः। ताभिरविशिष्टास्तत्प्रतिबिम्बरूपाः पुरुषस्य भवन्ति। याभिः शान्तोऽस्मि, दुःखितोऽस्मि, मूढोऽस्मीत्यध्यवस्यति। अतो न स्वभावात् प्रच्युतिः। न हि लौहित्यप्रतिबिम्बकालेऽपि स्फटिकस्य स्वभावात् प्रच्युतिरस्ति। अतात्त्विकान्यथाभावस्य विकारित्वाप्रयोजकत्वादिति भावः ॥ ४ ॥

इदानीं चित्तस्येच्छादिलक्षणानेकवृत्तीनां निरोद्धव्यानां सत्त्वेऽपि तासां वक्ष्यमाणपञ्चप्रकारवृत्तिनिरोधेनैव निरोधो भवतीत्यभिप्रेत्य पुम्प्रयत्ननिरोद्धव्याः पञ्चप्रकारा एवेत्याह—

## वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥

वृत्तय इति वृत्तयश्चैत्रादिभेदाद् वृत्तिसमूहाः, पञ्चतय्यः पञ्चप्रकारा अवयवा यासां ताः। अवयविनो वृत्तिसमूहाः प्रमाणादिपञ्चप्रकारावयवका इति यावत् । तासां हानोपादानसिद्ध्यै भेदमाह ॥ क्लिष्टाऽक्लिष्टा इति ॥ तत्र क्लिष्टा विविधानेकविषयवासनानिबन्धना रागादिहेतुतया दुःखाख्यक्लेशफलिका विषयाकारवृत्तयो राजसतामस्यश्च। ताभिस्तृष्णादिद्वारा परानुग्रहनिग्रहाभ्यां धर्माधर्मयोरुत्पत्त्या दुःखधाराया एवानुभवात् । अक्लिष्टा विवेकख्यातितत्साधनसम्बद्धाः क्लेशफलकवृत्तिविरोधिन्यः सात्त्विक्यः। अक्लिष्टत्वं च यद्यपि प्रमाणवृत्तेरात्मगोचरायाः क्लेशादिविरोधित्वेन, विपर्ययस्य शालग्रामादौ विष्ण्वादिधीरूपस्य पुण्यविशेषजनकत्वेन, विकल्पस्य भेदवादिमते तत्त्वमस्यादिवाक्यजन्याभेदबोधस्य कथञ्चित् तत्त्वानुसारकत्वेन, निद्रायाः सुखाद्यनुभावकत्वेन, स्मृतेर्नीलमेघादिदर्शनजश्रीकृष्णादिविषयिण्या अदृष्टोत्पादकत्वेन स्फुटं, ताभिरेव च यथाक्रमं दृष्टादृष्टद्वारा क्लिष्टवृत्तीनां निरोधश्च भवतीत्यतो नासां निरोधो, न वा सर्वासां निरोधनार्थं साधनान्तरप्रयासश्चोचितस्तथाप्यासां

साक्षान्निरोधहेतुत्वस्य स्वरूपानुगुणत्वेन निरोधः सर्वासामात्यन्तिकनिरोधार्थं प्रयासान्तरस्योचित एवेति भावः ॥ ५ ॥

ता एव पञ्चवृत्तीरुपदिशति—

प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

प्रमाणेति उद्देशफलमितोऽन्याः साक्षान्निरोद्धव्या वृत्तयो न सन्तीति । यद्यपि लाघवतर्कानुगृहीतान्वयव्यतिरेकाभ्यां विशेषांशज्ञानस्याऽप्रमात्वावच्छिन्नं प्रति हेतुत्वाऽवधारणाद् विपर्ययादीनां साक्ष्याश्रिताऽविद्यावृत्तित्वपक्षस्य वेदान्तिभिरङ्गीकृतस्य युक्तत्वाच्चित्तवृत्तित्वकथनं युक्तं, तथापि स्वमतेऽनिर्वचनीयाऽसाद्यज्ञानस्य मानाभावेनानङ्गीकारान्मनःपरिणामत्वमेव विपर्ययादीनाम् । अत एव स्वप्नशुक्तिरजतादयोऽपि चित्तपरिणामा एव बाधाबाधाभ्यां सदसद्रूपा इति सदसत्ख्यातिरित्याद्यग्रेऽविद्यासूत्रे स्फुटीभविष्यति ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजते—

प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

प्रत्यक्षेति तत्रोपमानस्य, गवयपदं गवयवाचकम् । असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमानत्वात् । योऽसति वृत्त्यन्तरे वृद्धैर्यत्र प्रयुज्यते स तद्वाचकः । यथा गोशब्दादिः । गवयो गवयपदवाच्यो गोसदृशत्वात् । व्यतिरेके घटवदित्याद्यनुमाने ।

अर्थापत्तेरपि, अयं रात्रिभोजी, दिवाऽभुञ्जानत्वे सति पीनत्वादित्यनुमाने । अनुपलब्धेस्तु, यदि स्यादुपलभ्येतेत्यादिप्रतियोगिसत्त्वप्रसञ्जितप्रतियोग्युपलब्ध्यभावरूपायाः प्रत्यक्षसहकारित्वेन प्रत्यक्षे । इति होचुरित्यैतिह्यस्य तु शब्दे । सम्भवस्य तु, खार्यां द्रोणादिपरिमाणसम्भावनारूपस्यानुमाने । चेष्टाया अपि, गेहे कति घटाः सन्तीति प्रश्ने, दशाङ्गुलीप्रदर्शनरूपाया अनुमाने, दशादिपदस्मरणे तु शब्द एवान्तर्भावात् त्रीण्येव प्रमाणानीति भावः । तत्राऽविसंवादि ज्ञानम्, अनधिगततत्त्वबोधो वा प्रमा, तत्करणं प्रमाणमिति प्रमाणसामान्यलक्षणम् । तत्रेन्द्रियसञ्चारमार्गेण बाह्यवस्तुसम्बन्धाच्चित्तस्याऽखिलार्थावगाहनावत इन्द्रियविषयसामान्यविशेषात्मनोऽर्थस्य विशेषाऽवधारणप्रधाना वृत्तिः प्रत्यक्षम् । यथा, घटोऽयमित्या-

दिगृहीतव्याप्तिकेन हेतुना साध्यवति पक्षे ज्ञायमानेन साध्यस्य सामान्यात्मनाऽध्यवसायोऽनुमानम् । तच्चानुमानं त्रिविधमुक्तं न्याये— पूर्ववत्, शेषवत्, सामान्यतोदृष्टं चेति । पूर्ववत् पूर्वम् अन्वयस्तद्वत् केवलान्वयीत्यर्थः । यथा— इदमभिधेयं, प्रमेयत्वात्, सम्मतवदित्यादि शेषो व्यतिरेकस्तद्वत् केवलव्यतिरेकी । यथा— पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वात् व्यतिरेके जलादिवदित्यादि । सामान्यतोदृष्टम् । अन्वयेन व्यतिरेकेण च गृहीतव्याप्तिकम् । यथा— वह्निमान् धूमादित्यादि। प्रकृतवाक्यार्थयथार्थज्ञानवत्स्वरूपाप्तत्वविशिष्टेन पुरुषेण दृष्टश्रुतानुमितार्थानां परं प्रति यथार्थबोधार्थमुपदिष्टेनाऽऽकाङ्क्षासत्तियोग्यतादिमता शब्देन श्रोतुस्तदर्थाकारा वृत्तिरागमः । यथा स्वर्गकामो यजेतेत्यादिवाक्यात् स्वर्गकामनावता यागः कार्य इति । पौरुषेयो बोधः सर्वत्र फलम् । येन, जानामि, ज्ञातः स्फुरति घटादिः प्रकट इत्येवं व्यवहरति जनः । तत्र यत्र यस्य शब्दस्य भ्रमादिमानन्ताप्तो वक्ता स नागमः । यथा चैत्यवन्दनं कार्यमित्यादि । मन्वादिस्मृतयस्तु निर्णीतप्रमाणवेदमूलकत्वादागमा एव । एवमन्येऽपि इष्टार्थका अस्मदादिशब्दा इति संक्षेप. ॥ ७ ॥

विपर्ययं लक्षयति—

विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

विपर्यय इति लक्ष्यनिर्देशः । मिथ्याज्ञानमित्यादिलक्षणम् । तच्चायथार्थज्ञानम् । तद्विकल्पेऽप्यनुगतमित्यत आह ॥ अतद्रूपप्रतिष्ठमिति ॥ तच्च रूपं चेति तद्रूपं ज्ञानस्वरूपम् । तस्मिन्न विद्यते प्रतिष्ठा बाधाऽप्रतियध्यत्वं यस्य तत् । यथा शुक्त्यादिविशेषदर्शनप्रतिबध्यं रजतादिज्ञानम् । विकल्पस्तु प्रत्यक्षप्रमावत् बाधाऽप्रतिबध्य एव । इदमनित्यमिति ज्ञातेऽपि बाधितस्यैव फलहादौ शाब्दज्ञानोदयात् । अतो, न तत्रातिव्याप्तिः । बाधयास्वपरोक्षप्रमायामतिव्याप्तिवारणाय मिथ्याज्ञानमिति ॥ ८ ॥

विकल्पं लक्षयति—

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥

शब्देति ॥ शब्दश्च ज्ञानं च शब्दज्ञाने । ते अनुपातिनी जनके

मस्य स शाब्दज्ञानानुपाती, श्रोतु श्रूयमाणशब्दहेतुक', प्रयोक्तु प' दार्थोपस्थितिहेतुको, बाधनिश्चयेऽपि कलहादौ नरशृङ्गादिप्रयोगे, उत्प्रेक्षादौ च सर्वाऽनुभवसिद्धः । वस्तुशून्यो बाधितविषयप्रत्यय नरविषाणं, खपुष्पं, चैतन्यं पुरुषस्य स्वरूपमित्याद्याकारा विकल्पाख्या वृत्तिरित्यर्थः । वस्तुशून्यत्वाचायं प्रमाणम् । बाधाप्रतिबध्यत्वाच्च न विपर्ययः । नच बाधबुद्धिमत्त्वे विशिष्टप्रत्ययः कथं, लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यविशिष्टबुद्धेर्बाधप्रतिबध्यत्वादिति वाच्यम् । सत्यपि बाधनिश्चये, धूमस्तोम तमदशङ्के दाधाविरहमुप्भणामित्याद्युत्प्रेक्षादिवाक्यतः शाब्दबोधस्यानुभवसिद्धत्वेन शाब्दातिरिक्तत्वेनापि तादृशधियो विशेषणीयत्वात् । अनाहार्यबुद्धेरेव तथाविधाया बाधप्रतिबध्यत्वाङ्गीकाराच्च । अन्यथा कलहतर्कादिनापि प्रतिपत्तिर्न स्यात् । नैयायिकानां तु योग्यताया बाधेनाश शब्दाऽऽहार्यस्यापि असंभवात् पदार्थोपस्थितिमात्र न शाब्दबोध इति सङ्क्षेपः ॥ ९ ॥

निद्रां लक्षयति—

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

जाग्रत्स्वप्नवृत्तीनामभावस्य प्रत्यय. प्रत्येति जनयतीति प्रत्ययो हेतु. तम आलम्बन विषयो यस्याः सा वृत्तिर्निद्रा । अस्या — सुखमहमस्वाप्स न किञ्चिदवेदिषमिति सुषुप्त्यनन्तर जागरे स्मृतिदर्शनात् स्मृतेश्चानुभवव्यतिरेकेणानुपपत्तेर्वृत्तित्वम् । वृत्तिपद तु, ज्ञानसामान्याभावो निद्रेति नार्किकमतनिरासाय । अत्र भाष्यम्॥ सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेष एव । कथम् । उच्यते । सुखमहमस्वाप्सं, प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति । दु खमहमस्वाप्सं, स्त्यानं मे मनो भ्रमत्यनवस्थितम् । गाढं मूढोऽहमस्वाप्सं, गुरूणि मेऽङ्गानि क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति । स खल्वय प्रबुद्धस्य प्रत्यवमर्शो न स्याद् असति प्रत्ययानुभवे । तदाश्रिताः स्मृतयश्च तद्विषया न स्युः । तस्मात् प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ भाष्यार्थस्तु— सा च निद्रा तु सम्प्रबोधे जागरे, प्रत्यवमर्शात् स्मरणात्, प्रत्ययविशेष एव वृत्तिरूपैव, न ज्ञानसामान्याभावा, न वा साक्षिरूपा । जागरे स्मरणानुपप-

तेः । अनुभवसुखमावस्यारूपसंस्कारं विना साक्षिणाऽपि स्मृतेरसम्भवात् स्मरणाकारं पृच्छति कथमिति । उत्तरमाह । उच्यत इति । वृत्तिमात्रस्य त्रिगुणात्मकत्वसूचनाय तदुक्तम् । आदौ सत्त्वफलमाह । सुखमिति । ततस्तदभिनयति । प्रसन्नं निर्मलम् । प्रज्ञां स्वांशमाज्ञायमानां यथार्थवृत्तिं, विशारदीकरोति सूक्ष्मार्थग्रहणयोग्यां करोति । इदञ्च तत्र सत्त्वोद्रेकस्य फलम् । रजसः फलमाह । दुःखमिति । ततस्तदभिनयति । स्त्यानमकर्मण्यम् । अनवस्थितमस्थिरम् । तमसः फलमाह । गाढमिति । ततस्तदभिनयति । गुरूणि मेऽङ्गानि, अलसत्वम्, मुषितमिव परैरपहृतमिव तिष्ठतीत्यर्थः । अन्वयमुखेन सुषुप्तावनुभवमुपपाद्य व्यतिरेकमुखेनोपपादयति । स खल्विति । प्रत्ययानुभवे सुप्तोत्थप्रत्ययानुभवे असति योऽयं प्रत्ययमर्शो जागरं स्मृतिरूपः खलु न स्यादित्यर्थः । अनुभवं विना स्मृतेरदर्शनादिति भावः । अन्वस्तु तत्रानुभवः, परन्तु साक्ष्याश्रित एव सोऽविद्यावृत्तिरूपोऽस्तु, न चित्तपरिणामरूपः । चित्तस्य तदानीं लीनत्वात् । तत्राह, तदाश्रिता इति । चित्ताश्रिताः स्मृतयः सुखदुःखादिविषया न स्युः साक्षिणा दृष्टस्य चित्तेन स्मरणासम्भवादित्यर्थः । स्मृतिश्चित्तस्यैव धर्मः । तत्कार्यहर्षविषादेच्छादेस्तत्रैव सम्भवादिति भावः । सा चेति । चो हेतौ । यतः सा सुखमोहान्विता, अत एव समाध्यान्तरप्रत्ययविरोधिन्येत्यर्थः । स्वाप उद्रिक्तं तमः । निद्रा स्वापप्रधाना सुखस्वापाहमर्थगोचरा वृत्तिः सुखमहं स्वपिमीत्याकारा विविधा समूहालम्बनाऽऽत्मिका निर्विकल्पिका या । तामेव तत्र आत्मनः पुरुषः स्वम इवात्मप्रज्ञोऽपि दृग्दृश्यभेदाभिमानाभावात् सुषुप्तिस्थान एकीभूत इत्युच्यते श्रुतिभिः । इत्थं भेदमभिप्रेत्यैव स्वापानुभववृत्तिर्निद्रेत्युक्तिः । लोके, अयं स्वपितीति निद्रातीति स्वपितिनिद्राल्वोः पर्यायस्तु विषयविषयिणोरभेदाभिमानादिति दिक् ॥

तत्र साऽविद्यांशसत्त्वपरिणामो न चित्तस्य । तस्य तत्र लीनत्वात् । अन्यथा स्वप्नजागरणयोरन्यतरापत्तिरिति वेदान्तिनः । तन्न युक्तम् । दुःखानुभवानुपपत्तेः । दुःखस्य च चित्तमात्रधर्मत्वात् । नच स्वप्नजागरणयोरन्यतरापत्तिरिति वाच्यम् । स्वापादृष्टेन तयोः प्रतिबन्धात् । अत एव तत्र नात्मस्वरूपसुखस्यानुभवः, किन्तु चित्तपरिणामरूपस्यैव । त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेदिति

श्रुत्यापि भोक्तृभोग्यसंयोगानां तत्र सद्भावकथनेन तावदर्थज्ञापनादि-त्यभिमानिनः ॥

अथ, यत्रैतत् पुरुषः स्वपिति निद्रा नाम, सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति स्वं ह्यपीतो भवति तस्मादेनं स्वपितीत्याचक्षते, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येदित्यादिश्रुतिभिः सत्सम्पत्तेर्निर्विषयत्वादिकथनेन सुषुप्तौ चित्तलयप्रतिपादनात् ब्रह्मसुखस्यैव तत्र भानम् । निद्राप्यविद्यावृत्तिरेव । भोक्तृभोग्यानां सत्त्वांशसंस्काररूपेण संस्कारसत्त्वेऽपि द्वितीयाभावस्तु अभिमानाभावमादायेति वेदान्तिनामभिप्रायादिति चेत् । अत्र वदन्ति । सत्सम्पत्तिरपि दुग्धजलयोरिव एकीभावो, न त्वेकतैव । पुनरुत्थानाभावप्रसङ्गात् । सापि यद्यपि लयात्, तथाऽपि लयोऽत्र न कारणात्मनाऽवस्थितिः, किन्तु स्वाभाविकबहिःप्रवहणशीलत्वाभावमात्रम् । तथाच तत्र मनःसत्त्वेऽपि न हानिर्न वा श्रुतिविरोधः । अतो निद्रा मनस एव वृत्तिः । सुखमपि तस्यैव सत्त्वांशपरिणामो, नात्मरूपमित्यास्तां विस्तरः ॥

नैयायिकास्तु— यदा मनः पुरीतति प्रविशति तदा त्वङ्मनोयोगरूपकारणाभावाज्ज्ञानसामान्याभावः । सैव सुषुप्तिः । प्रमाणञ्चात्र, यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीततिमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते इति श्रुतिः । अनया पुरीतत्प्रवेशेन त्वङ्मनोयोगाभावस्योक्त्या ज्ञानाभावमात्रकथनात् । तस्मान्न चित्तलयो, न वा चित्तपरिणामस्तत्रेति वदन्त उदाहृतानुभवान् स्वप्नेऽन्तर्भावयन्ति । तन्न सम्यक् । यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यतीत्युपक्रम्य आनन्दभुक्चेतोमुखः प्राज्ञस्तृतीयपाद इत्यादिश्रुतिभिरुक्तानुभवानां सुषुप्तिकालिकत्वावगमात् । सुषुप्तौ ज्ञानसामान्याभावस्य वक्तुमशक्यत्वात् । त्वदुदाहृतश्रुतेर्मनसः संस्काररूपेणावस्थितौ कथितवृत्तिभिन्नवृत्तिसामान्याभावे तात्पर्यात् । इन्द्रियाद्युत्पत्तेः प्रागेव हिरण्यगर्भस्य ज्ञानोत्पत्त्या ज्ञानसामान्ये त्वङ्मनोयोगस्य हेतुत्वाऽयोगात् । एतेन जन्यज्ञानमात्रे त्वङ्मनोयोगस्य हेतुत्वमङ्गीकृत्य तदभावबलात्, न किञ्चिदवेदिषमिति परामर्शस्यापि च सुषुप्तौ ज्ञानसामान्याभावमङ्गीकुर्वतोरपि नस्य

स्वापसुखादिप्रत्ययोऽनुमितिरेव । सुषुप्तिकालीनात्मा ज्ञानाभाववान्, ज्ञानसामग्र्यभावात् । मुक्तिकालिकात्मवत् । सुषुप्तिकालिकात्मा दुःखाभाववान् दुःखसामग्रीशून्यत्वात् । मुक्तिकालिकात्मवदित्यनुमानसम्भवात् सौषुप्तदुःखाभावे सुखशब्दप्रयोगस्यौपचारिकत्वात् । अन्यथा अक्लृप्तनित्यसुखकल्पनागौरवप्रसङ्गादिति परास्तम् । सुषुप्तिपरिचयं विना पक्षाज्ञानादनुमानानुदयाच्च । न च कालाद्याश्रिता सामान्यलक्षणप्रत्यासत्त्या परिचय । सामान्यलक्षणाया एवालीकत्वात् । अभ्युपगमेऽपि स्वाऽभिमतासिद्धेः । कालस्वरूपेण परिचयेऽपि सुषुप्तित्वरूपेणापरिचयात्तद्घटितानुमानस्य कालाऽन्तरीयज्ञानाऽभावसाधारण्यादर्थान्तरात् ॥

नन्वहोरात्रस्य प्रहराष्टकरूपत्वेन ज्ञानात् प्रहरद्वयं सुप्तोत्थितेन प्रहरषट्कस्य जागरकालत्वेन ज्ञानात् परिशेषाद् अवशिष्टप्रहरद्वयस्य वस्तुत. सुषुप्तिकालस्य स्वज्ञानत्वात् तत्कालीनात्मन्यनुमितौ नानुपपत्ति । एव सर्वसुषुप्तिषु तत्कालपरिचयो द्रष्टव्य इति चेन्न । अहोरात्रपरिणामादिविवेकरहितानामपि मुग्धबालप्रभृतीनां, तद्विवेकवतामपि विनैव तत्प्रतिसन्धानं सुखमहमस्वाप्समिति प्रतीतिसत्त्वात् । उक्तप्रहरद्वयेन तत्कालज्ञानेऽपि सुषुप्तेरज्ञानात्, अस्वाप्समित्यभिलापासम्भवाच्च । न ह्युक्तप्रहरद्वयकालसम्बन्धिनी एव सुषुप्ति. । न वा तत्कालीनात्मयोग्यविशेषगुणाभाव. । आद्ये तस्य पुरुषान्तरसाधारण्यात् तस्यापि, तदा स्वपिमीति व्यवहारापत्ते. । द्वितीयस्त्वप्रसिद्ध. । पुरुषान्तरे तदा ज्ञानाद्यन्यतमसत्त्वात् । न च यस्य यत्काले वस्तुत उक्तगुणाभावस्तस्य सुषुप्तिरिति वाच्यम् । पुरुषाणामानन्त्यात् प्रतिपुरुष च सुषुप्तिकालानामानन्त्याद् अनियतपरिमाणत्वाच्च स्वपिधातोरव्यवस्थितानन्तार्थकत्वापत्ते. । मम तु अस्वाप्समित्यनुगताकारस्मृतिहेत्वनुभवसाक्षिक. प्रलीनबुद्धि प्रयाहकमनस्कतमोऽवस्थाविशेषनिष्ठो जातिविशेष इत्यनुगमादेकार्थत्वोपपत्ति. । यत्तु, नाडीविशेषमन सयोग. सुषुप्तिरिति तन्न सम्यक् । तस्यातीन्द्रियत्वेनायालानां जनानाम्,अस्वाप्समितिस्मृतिहेतुप्रत्यक्षाऽयोगादुदाहृतश्रुतिविरोधाच्च । अत्र यद्यप्यहमर्थस्य वर्तमानतया प्रत्यक्षत्वान्न स्मृति, तथापि स्वापावस्थाया अतीतत्वाद् भवति स्मृति । सुखस्य वेदान्तनये नित्यतया वर्तमानत्वाद् अस्मरणापत्ति ।

स्वमते तु मन परिणामरूपस्य तस्याप्यतीतत्वात् सम्भवति तस्यापि स्मृति । न वाहमर्थस्य प्रत्यक्षत्वे, अहमस्वाप्समिति भूतलकालसम-पुरुषाभिलापानुपपत्ति । स्मर्यमाणस्वापसम्बन्धात् स्मर्यमाणत्वारा-पादृत्यालं विस्तर ॥ १० ॥

स्मृतिं लक्षयति—

अनुभूतविषयाऽसम्प्रमोषः स्मृतिः ॥ ११ ॥

अनुभूयत इत्यनुभवोऽनुभवविषय । तस्माद्विषयस्याज्ञानस्याधिकस्य न सम्प्रमोष स्तेय परिग्रहो यत्र तादृशोऽनुभवविषयादनधिकविषयो गृहीतग्राही प्रत्यय, सा गङ्गा मया दृष्टेत्याद्याकार स्मृतिरित्यर्थ । न च प्राथमिकानुभवविषयविषयकधारावाहिकद्वितीयादिज्ञानेऽतिव्याप्ति । तत्र, न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासत इति न्यायेन क्षणादिरूपाधिकार्थभानाङ्गीकाराद् अगृहीतग्राहित्वस्यैव सत्त्वात् । स्मृतौ तु क्षणादिभानस्याननुभवतात्कन्याय प्रत्ययपदस्यानुभवपरत्वात् स्मृतौ क्षणवैशिष्ट्यभानानङ्गीकार इति भाव । ननु लाघवात् संस्कारजन्य ज्ञान स्मृतिरित्येव लक्षणमुचितमिति चेन्न । तावन्मात्रस्य प्रत्यभिज्ञायामतिव्याप्त । संस्कार-मात्रजन्यत्वस्यादृष्टदेशकालादिरूपसामग्र्यपेक्षायामसम्भवात् । यदि मात्रपदेन प्रमाणस्यैव व्यवच्छेदस्तदास्तु वा । अनुभूतेत्यनेन संस्कारजन्यत्वज्ञापनात् तदपि लक्षणम् । तदापि न हानि । लक्षणस्य लक्षणान्तराविरोधित्वादिति संक्षेप ॥

अत्र साम्प्रदायिकास्तु— अनुभूतेत्यस्य अनुभूतौ चितिशक्त्या परोक्षतया गृहीतौ यौ विषयौ वृत्तितद्वद्रूपावर्थौ तयोरसम्प्रमोष-अनपहरणं यत्र तादृशस्तदुभयविषयकप्रत्यय स्मृतिरित्यर्थमङ्गीकृत्य वृत्तस्तद्विषयस्य च स्मरणमिच्छन्ति । घट इत्यादिस्मरणेऽनुभूततारूपतत्तानिदारूढार्थयोर्द्वयोरपि भानस्यानुभवसिद्धत्वात् । तथा-चैतन्मते वित्तिवेद्योभयानुभव विना वित्तिवेद्योभयस्मरणायोगादय घट इत्याद्यनुभवेऽपि वृत्तितदारूढयोर्द्वयोर्भानमावश्यकमिति सर्वमेव ज्ञानं व्यवसायात्मकम् । साक्षिरूपचितिशक्त्यैव वित्तिवेद्ययोर्ग्रहणात् । इत्थञ्चैतन्मते अनुभवस्मृत्यो समानप्रकारत्वादिना हेतुहेतुमद्भावोऽप्यविरुद्ध । अय घट इत्यनुभूततारूपतत्ताप्रकारकज्ञाना-

त, स घट इत्याद्यनुभवप्रकाशिकाया, घटमहं जानामीति ज्ञानविशे-ष्यकाच्च घटमहं स्मरामीति ज्ञानविशेष्यिकायाः स्मृतेर्दर्शनात् । यदि च घटमहं जानामीति ज्ञानादपि स घट इति तत्ताप्रकारिका स्मृतिस्तदास्तु प्रकारकत्वविशेष्यत्वादिर्मन्तर्भाव्य समानविषयत्वेनै-वानुभवस्मृत्योः कार्यकारणभावः । नचान्यविशेष्यकज्ञानादन्यविशे-ष्यकस्मरणप्रसङ्गः । इष्टापत्तेः । तदुक्तं भाष्येऽपि— ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिरिति । घटमहं जानामीति ज्ञानविशेष्य-कोऽनुभवः । स घट इति घटविशेष्यिका स्मृतिरिति तदर्थः । अत्र पूर्वशब्दो विशेष्यपरः । नचैवं सति स्मृतेर्युगपदुभयविशेष्यक-त्वापत्तिः । सामग्र्या समत्वादिति वाच्यम् । विशेष्योद्बोधकानां हेतुत्वकल्पनाभिस्तन्निरासादिति यत्किञ्चिदेतत् । एतावाँस्तु विशे-षः । तार्किकस्यायं घटो घटमहं जानामीत्यनयोर्व्यवसायानुव्यवसा-यभेदाद्भेदः । पूर्वस्य विषयेन्द्रियसन्निकर्षजन्यस्य विषयमात्रग्राह-कत्वात् । द्वितीयस्य तु मनोमात्रजन्यस्य ज्ञानगोचरत्वात् । यद्यपि स्वमते तु न तथा । वृत्तिवेद्योभयविषयत्वेन द्वयोरपि व्यवसाय-स्थानीयत्वात् । तथाप्यज्ञाननाशकोऽयं घट इत्याद्याकारः । अज्ञान-नाशोत्तरं तु घटमहं जानामीत्याद्याकारः क्रियाजन्यफलभागिताख्य-कर्मतायास्तदानीमेव भानसम्भवात् । वेदान्तिनस्तु वृत्त्यवच्छिन्नचै-तन्यमज्ञाननाशकं व्यवसायः । विषयमात्रग्राहकत्वात् । वित्तिवेद्योभ-यार्थग्राहकं वृत्त्याद्युपहितं त्वनुव्यवसाय इति तयोस्तार्किकाणा-मिव भेद एवेति वदन्ति । परन्तु तार्किकाणामनुव्यवसायो जन्य-त्वादनन्तः । वेदान्तिनान्तु स्वयमात्मैवेत्यन्यदेतत् । युक्तश्चायं पक्षः यद्यपि ज्ञानकर्मतायाः पश्चादेवानुभवात् तथापि ग्रहणसमर्थया चितिशक्त्या वृत्त्युत्पत्तिकाले वृत्तरपि विषयस्येव ग्रहणसम्भवाद् वृत्तिवेद्योभयभानविषयनिबन्धनभेदात् तयोः पौर्वापर्यकल्पनमयुक्तमि-त्येति सूत्रकारप्रभृतेर्गूढाभिसन्धिः । प्रकृतमनुसरामः । तथाऽपि स घट इत्येवं स्मरणपक्षे प्रमुष्टतत्ताकज्ञानस्य संस्कारमात्रजन्यस्य स्मरण-त्वलोपप्रसङ्गः । तत्तायास्तत्राभानादिति चेन्न । तादृशनियमस्यौत्सर्गि-कत्वात् । अत एव निद्रासूत्रे उदाहृतसुखस्मरणस्योद्बोधकदोषात् प्रमुष्टतत्ताकत्वेऽपि नैतत्सूत्रविरोध इति वदन्ति । ननु स्वप्ने सूकरे गजत्वाद्यारोप्यमननुभूतमपि स्मर्यत इति चेन्न । तस्य विपर्ययत्वादि-

ति दिक् ॥ ११ ॥

आसां वृत्तीनां निरोधोपायमाह—

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

अभ्यासवैराग्याभ्यामनुपदं वक्ष्यमाणाभ्यां समुच्चिताभ्यां तन्निरोधः । तासां क्लिष्टानामक्लिष्टानां च वृत्तीनां निरोधः कथितः प्रयाजाद्यङ्गानामपूर्वरूपव्यापारभेदादिव व्यापारभेदाद्धपतीत्यर्थः । यथाऽभिवृद्धनद्या द्विविध. प्रवाहो ग्रामनगरादिमज्जनानुकूलः क्षेत्रादिसेचनाऽनुकूलश्चानर्थायार्थाय च । तत्र ग्रामादिमज्जनानुकूलः सेत्वादिना प्रतिबध्यते । क्षेत्राद्यनुकूलश्चाल्पकुल्याखननादिना सम्पाद्यते । एवञ्चित्तनद्याः संसारसागराभिमुखो विषयभूमिगोऽनर्थप्रवाहो वैराग्येण भज्यते । निद्रादिदोषवारणायात्मभूमिगो मोक्षसुखसागराभिमुखोऽर्थप्रवाहोऽभ्यासेन वर्द्धते इत्यभ्यासवैराग्ययोश्चित्तवृत्तिनिरोधे समुच्चयाऽत्र द्विवचनेन, अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते इति चशब्देन भगवताऽत्राभिहित इति दिक् ॥ १२ ॥

अभ्यासं लक्षयति—

तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

तत्र तयोर्मध्ये तस्मिन् परात्मनि सच्चिद्रूप इति वा स्थितिरेकाग्रता तदर्थं प्रयत्न उत्साहसाहसधैर्याध्यात्मविद्याध्ययनब्रह्मसेवनयमनियमाद्यनुष्ठानलक्षणोऽभ्यास इत्यर्थः । तत्रोत्साहः सर्वदा यदि प्रयत्नशील चित्तं निरोत्स्यामीत्येवमुद्यमः साहसं, साध्यासाध्यत्वाद्यपरामृश्य शीघ्र प्रवृत्तिः । धैर्यम्, इह जन्मनि जन्मान्तरे वा सेत्स्यत्येवेत्यखेदः । तदेतदुदाजहुर्गौडपादाः— उत्सेक उदधेर्यद्वत् कुशाग्रेणैव बिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदत इति । तत्राचार्यायिकां प्राहुः साम्प्रदायिकाः— कस्यचित्तीरस्थपक्षिणोऽण्डानि समुद्रस्तरङ्गैराजहार 'स एनं शोषयाम्येवेति ढृतं प्रवृत्त' स्वमुखाग्रेणैकैकं जलबिन्दुमुत्क्षेप । वारयमाणोऽपि बन्धून् सहायान् वव्रे । ततश्च कृतनिवारणोऽपि नारदोऽस्याखेदप्रवृत्त्या तुष्टः, स्वज्ञातिद्रोहेण स्वामयज्ञानाति समुद्र इति गरुडं प्रेषयामास । समुद्रश्च गरुडपक्षवातभीत. पक्षिणोऽण्डानि ददावित्ति । एवमखेदादिना मनोनिरोधे यत-

मानस्य योगिन ईश्वरानुग्रहाद्विघ्नासिद्धिरिति भावः । एवमभ्यासमविधायाऽध्ययनेनापि स्वर्गोच्चरेषु मिथ्याग्रहेण प्रयोजनाभासं प्रयोजनवत्स्मरन्ति च स्वार्गोचरत्वं ज्ञात्वा निरिन्धनाग्निवच्चित्तं स्वयमेवोपशाम्यति । महत्सेवा च महतां प्रणिपातपरिप्रश्नपरिचर्यादि । तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया * इति भगवदुक्तेः । समादीन् सूत्रकार एव वक्ष्यति ॥ १३ ॥

अध्ययनादिकालप्रवृत्तराजसतामससंस्कारैर्विरोधिभिः प्रबलैः कुण्ठितोऽभ्यासो न स्थित्यै कल्पत इत्यत आह—

स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः ॥१४॥

तुशब्दः शङ्काव्यावृत्तौ । सोऽभ्यासो दीर्घकालं नैरन्तर्येण भक्तिश्रद्धादिरूपसत्कारेण सेवितो दृढभूमिर्दृढसंस्कारः सन् । व्युत्थानसंस्कारैरनभिभवेन स्थितौ समर्थो भवतीत्यर्थः । अदीर्घकालत्वे दीर्घकालत्वेऽपि विच्छिद्यविच्छिद्य सेवने भक्तिश्रद्धातिशयाभावेन लयविक्षेपकषायसुखास्वादानामपरिहारे व्युत्थानसंस्कारप्राबल्याद् दृढभूमिरभ्यासः फलाय न कल्पत इति त्रयमुपात्तम् ॥ १४ ॥

वैराग्यं लक्षयति—

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

दृष्टाश्चानुश्रविकाश्च दृष्टानुश्रविकास्ते च विषयाश्चेति । दृष्टाः स्त्र्यन्नपानादयः । गुरुमुखादनुश्रूयत इत्यनुश्रवो वेदस्तत्प्रतिपाद्याः स्वर्गादिस्तत्साधनादय आनुश्रविकाः । तेषु वितृष्णस्य । ये हि संस्पर्शजा भोगा दुःखयोनय एव ते * आद्यन्तवन्तः कौन्तेय न तेषु रमते बुध इत्यादिभगवदुक्तदिशाऽनेकदोषदुष्टत्वभावनाजनितदोषसाक्षात्कारात् तृष्णारहितस्य या वशीकारसंज्ञा वशीकृता मे विषया अलं विषयैस्तुच्छैरित्युपेक्षा बुद्धिर्वैराग्यमित्यर्थः । विषयपदोपादानं तु सद्गुरुसच्छास्त्रादीनां दृष्टानां मोक्षस्य चानुश्रविकस्य व्यावृत्तये । विषयिणं प्रमातारमवबध्नन्ति स्वसंयोगेन स्वासक्त्या संसारमभिनयन्तीति सिद्धं बन्धकत्वरूपं विषयत्वं तेषु नास्तीति भावः ।

वशीकार इत्यनेन विषयालाभसामर्थ्याद्वै वैतृष्ण्यं, न वैराग्यमिति सूचितम् । संज्ञापदेन च यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञाभिः चातुर्विध्यं सूचितम् । तत्र विषयान् सन्त्यक्तुमशक्नुवतोऽपि समानेच्छात्यागमात्रेणाऽऽद्यम् । ततोऽपि विषयाणां मध्ये प्रियतर-वस्तुनि व्यतिरेकवृत्तिर्द्वितीयम् तथावृत्तावपि मनसि रागद्वेषविलयात् बाह्येन्द्रियैरेव सेवनं तृतीयम् , तत्राप्यौदासीन्यं चतुर्थम् । तदुक्तं—
वैराग्यमाद्यं यतमानसंज्ञं कश्चिद्विरागो व्यतिरेकसंज्ञः * एकेन्द्रियाख्यं हृदिरागसौक्ष्म्यं तस्याप्यभावस्तु वशीकृताख्यमिति । अथवा,
सारासारविवेकार्थमुद्योगः प्रथमो भवेत् * अभ्यासेन कषायाणां परिशेषावधारणम् ॥ द्वितीयोऽथ कषायाणामौत्सुक्येन व्यवस्थितिः * मनस्येव तृतीयः स्याद् बहिर्भोगानिवृत्तितः ॥ उपेक्षा सर्वथा तत्र स्याद्विरागश्चतुर्थक इति ॥ १५ ॥

अपरं वैराग्यमुक्त्वा परवैराग्यमाह—

## तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

तत्र वशीकारसंज्ञे वैराग्ये जाते सति सम्प्रज्ञातप्रभावेण पुरुषस्य या ख्यातिः प्रधानाद्विवेकेन यः साक्षात्कारः तत्परिपाकात् गुणवैतृष्ण्य गुणत्रयाशेषव्यवहारेषु, प्राप्तं प्रापणीयं, कृतं कर्तव्यं, ज्ञातं ज्ञातव्यं, हातं हातव्यमिति तृष्णाविरोधिनी चित्तवृत्तिर्भवति । तत् परं श्रेष्ठं फलीभूतं वैराग्यं, तत्परिपाकाच्चित्तोपशमपरिपाकात्तोऽखिलत्वेन कैवल्यमित्यर्थः । पुरुषख्यातेरित्यनेनात्मज्ञानहेतुकवैराग्यस्य परत्वं वदता लौकिकानामालस्यविशेषदर्शादिजनितस्य हेतुत्वं ध्वनितम् । तद्विवेकस्तु— प्रकृतित एव सर्वं जायतेऽतो मोक्षोऽपि तत्परिणामरूपसाक्षात्कारेणं भविष्यतीति प्रकृतिविश्वासेन, गृहस्थानां मुक्तत्वाभावाद्यथाकथञ्चित् परिव्राजविश्वासेन वा, कालादेव सर्वं जायतेऽतो मोक्षोऽपि काले भविष्यतीति कालविश्वासेन वा, भाग्यादेव सर्वं जायते इति भाग्यविश्वासेन वा मोक्षोपायेषु विषयेषु वाऽर्जनरक्षणक्षयाऽतृप्तिहिंसादिदोषदर्शने जातवैराग्यस्यात्मज्ञानपूर्वकत्यागाभावादेतत्परमेवोचितम् । सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः **ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्तीत्यादिश्रुत्यात्मज्ञानपूर्वकवैराग्यस्यैव मोक्षोपायत्वकथ-

नादिति सङ्क्षेपः । अत एव यथाकथञ्चिद् वैतृष्ण्यमात्रस्य निवृत्तये पूर्वं वशीकारकथनेऽपि नात्र तथोक्तिः । आत्मज्ञानकथनेनैव सामान्यवैतृष्ण्यव्यावृत्तेः सम्भवात् ॥ १६ ॥

इदानीमपरवैराग्यसाध्यं संप्रज्ञातं लक्षयति—

वितर्कविचारानन्दास्मितानुगमात् सम्प्रज्ञातः ॥ १७ ॥

प्रथमं भावनाविषयस्याशेषविशेषतः स्थूलांशचतुर्भुजाऽऽदेः साक्षात्कारो वितर्कः । विशेषेण तर्कणमिति व्युत्पत्तेः । स्थूलकारणमपञ्चतन्मात्राहङ्कारमहदव्यक्तसूक्ष्मसाक्षात्कारो विचारः । विशेषेण सूक्ष्मपर्यन्तं चरणमिति व्युत्पत्तेः । तत्रारोहात् सत्त्वप्रकर्षेण जायमानाह्लादस्य साक्षात्कार आनन्दः । यं लब्ध्वा चापरं लाभं मन्यते नाधिकं तत इत्यादिस्मृत्युक्त एतेषां कारणं बुद्धिः । सा ग्रहीत्रैकीभूताऽस्मितेत्युच्यते । तद्विषयकसाक्षात्कारोऽप्यस्मिता । एतैरनुगमाद् युक्तत्वाद्धेतोः सम्यक् प्रज्ञातत्वेन, भावनाविशेषरूपो योगः सम्प्रज्ञातनामा भवति । स च वितर्कादिभूमिभेदैः, सवितर्कः, सविचारः, सानन्दः, सास्मितश्चेति चतुर्धा भवतीत्यर्थः ॥ १७ ॥

अधुना सोपायमसम्प्रज्ञातं लक्षयति—

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥

विरमणं विरामो वृत्तीनामभावः । तस्य प्रत्ययः प्रत्येति जनयतीति प्रत्ययः कारणं परवैराग्यम् । तस्याभ्यासः पौनःपुन्यं पूर्वं उपायो यस्य स तथा । संस्कारशेषः ख्यातिसंस्कार एव शिष्यते यत्र सः, अन्यः असम्प्रज्ञातो निर्बीजसमाधिः कर्मबीजाभावात् अत्र पूर्वपदेनोपायस्य, शेषाभ्यां स्वरूपस्य कथनम् । अथवा संस्कारशेषः स्वापो विदेहप्रकृतिलीनानामनुभवश्च भवतीति तन्निवृत्त्यादिविचारणाय पूर्वपदम् । तावन्मात्रमौपनिषदानामात्ममात्रसत्त्वावबुद्धिजजीवन्मुक्तायतिरव्याप्तमिति संस्कारशेषपदम् । न हि तदानीं संस्कारशेषत्वमस्ति । मिथ्यात्वघटत्वादिना जगज्ज्ञानस्य तदानीमङ्गीकारात् । तथाच परवैराग्यहेतुकः संस्कारशेषोऽसम्प्रज्ञात इति सिद्धम् । सोऽयं योग एव भवतीति भावः ॥ १८ ॥

अयमसम्प्रज्ञातो द्विविधः— उपायप्रत्ययो, भवप्रत्ययश्च । तत्र मुमुक्षुभिर्हेयं भवप्रत्ययमाह—

## भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

भूतेन्द्रियाणामन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनतया तद्वासितान्तःकरणाः पिण्डपातानन्तरं भूतेन्द्रियेषु लीना मांसशोणितलोममेदोऽस्थिमज्जारूपषाट्कौषिकदेहशून्या विदेहाः । एवमव्यक्तमहदहङ्कारपञ्चतन्मात्राणामन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनतया तद्वासितान्तःकरणाः पिण्डपातानन्तरं प्रकृत्यादिकारणेषु लीनाः प्रकृतिलयाः । विदेहाश्च प्रकृतिलयाश्च विदेहप्रकृतिलयास्तेषां चित्तं संस्कारमात्रं शेषमित्यसम्प्रज्ञातः स तु भवप्रत्ययो, भवन्ति जायन्तेऽस्यामित्यनात्मन्यात्मबुद्धिः प्रत्ययो हेतुर्यस्य स तथा । अविद्यामूलोऽयं योगोऽतः हेयः । अत एवोक्तं वायुपुराणे, दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ॥ भौतिकाश्च शतं पूर्णं सहस्रं त्वाभिमानिकाः ॥ बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः ॥ पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥ पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते इति ॥ १९ ॥

अधुना मुमुक्षूणामुपायप्रत्ययं द्वितीयमाह—

## श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥२०॥

पुरुषगोचरा सात्त्विकी श्रद्धा तया वीर्यं प्रयत्नो जायते तेन यमादिपरम्परया स्मृतिर्ध्यानं, तेन समाधिः । तेन प्रज्ञा पुरुषगोचरा ख्यातिः । ततः परवैराग्यादसम्प्रज्ञात इतरेषां पूर्वविलक्षणानां मनुष्याणां मुमुक्षूणां भवतीत्यर्थः । अयमेव च राजयोग इत्युच्यते । तदुक्तं स्मृतौ— समाधिस्तत्र निर्बीजो राजयोगः प्रकीर्तितः ॥ दीपवद्भ्राजते यस्मादात्मा सच्चिन्मयः प्रभुरिति । वस्तुतस्तु प्रथमसूत्रस्थभवो विशिष्टे देवादिजन्म तदेव प्रत्ययः कारणं यस्येत्यर्थो, न तु कथितः । परवैराग्यस्यासम्प्रज्ञातहेतुतया तस्याऽविदुष्यऽसम्भवात् । इन्द्रियादिचिन्तामात्रेणासम्प्रज्ञातानुपपत्तेश्च । तस्मादीश्वरोपासनया प्रकृतिदेवतोपासनया वा प्रकृत्यावरणादिषु विशिष्टदेहप्राप्तिमाहात्म्येनोत्पन्नज्ञानादसम्प्रज्ञातयोगिनो भवन्ति । अधिकारसमाप्तौ

मुच्यन्ते । मनुष्यास्तु न तथा, किन्तु साधनान्तरेणैवेत्याह ॥ श्रद्धेति ॥ समानमन्यत् ॥ २० ॥

तत्र प्रक्रान्ता उपाया मृदुमध्याधिमात्रभेदेन त्रिविधाः । तथाच योगिनोऽपि त्रयः— मृदूपायो मध्योपायोऽधिमात्रोपायश्चेति । तत्रैकैकस्त्रिविधः—मृदुसंवेगो, मध्यसंवेगस्तीव्रसंवेगश्चेति । तत्र नवमस्याऽधिमात्रोपायस्य तीव्रसंवेगस्य क्षिप्रं सिद्धिमाह—

## तीव्रसंवेगानामासन्नः ॥ २१ ॥

संवेगोऽत्र वैराग्यम्, उपायानुष्ठानशैघ्र्यं वा, दृढतरसंस्कारो वा, येषामधिमात्रोपायस्तीव्रसंवेगस्तेषां योगिनाम् आसन्नः शीघ्रलभ्योऽसंप्रज्ञातः । ततो मोक्ष इत्यर्थः ॥ २१ ॥

नवमेऽप्यवान्तरभेदं विशेषं चाह—

## मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥ २२ ॥

पूर्वसूत्रोक्तविशिष्टान्तर्गतस्य तीव्रस्य मृदुमध्याधिमात्रत्वात् अल्पमध्यातिशयितभेदेन त्रैविध्यात् ततोऽप्यासन्नादपि विशेषः । मृदुतीव्रसंवेगस्य योगिन आसन्नात् समाधेः मध्यतीव्रसंवेगस्य योगिन आसन्नतरः । ततोऽधिमात्रतीव्रसंवेगस्यासन्नतमो भवतीत्यर्थः । इत्यत्र पूर्वसूत्रोक्तनवमयोगिनस्त्रयो भेदाः । तत्र चाऽन्तिमस्यैवातिशीघ्रलभ्योऽसंप्रज्ञात इति सिद्धम् ॥ २२ ॥

इदानीं पुरुषगोचरैतरसर्वनैरपेक्ष्येणाऽनन्येन ज्ञानद्वारा कैवल्यान्तफलं साधनम् । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्, देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे इत्यादिश्रुतिभिः । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥ ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ॥ न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥ यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ॥ योगेन दानधर्मेण श्रेयोभिरितरेण च ॥ सर्वं मद्भक्तियोगेन मद्भक्तो

लभतेऽक्षमा इत्यादिस्मृतिभिश्च तथा । तेनोक्तं भगवद्भजनरूपम् उपायमाह—

## ईश्वरप्रणिधानाद्वा ॥ २३ ॥

विशेष इत्यनुषज्ज्यते । ईश्वरे अनुपदवक्ष्यमाणलक्षणे प्रणिधानात् प्रणिधीयते तदेकमात्रनिष्ठं मनः क्रियतेऽनेनेति पुनःपुनः कृत्वा प्रम तत्साधनमन्त्रजपारोध्यत्वज्ञानादिरूपाद्वक्ष्यमाणाद् भक्तियोगाद् अनायासेन आसन्नतमः समाधिलाभो भवतीत्यर्थः । प्राक्तनसुकृतजन्यजातादनुग्रहात् तत्सम्भवेऽप्यासन्नतम इह प्रणिधानजन्या, सर्वज्ञं भगवन्तं भावयत आसन्नतमे समाधिफले भवेतामिति तदिच्छारूपात् तत्तदनुग्रहाद्वा सद्गुरुलाभादिरपि भवतीति यावत् यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इत्यादिश्रुतेः कुतः । कालेनानवच्छेदात् । अनाद्यनन्तत्वादित्यर्थः । द्विपरार्धादिकालायुषोऽपरिगणनादिति यावत् । तथा चायं पूर्णत्वात् परमगुरुः । अन्ये चाप्येवं ज्ञानशक्त्यवतारा इति ज्ञाने अर्चिता एव भवन्तीति भावः । एतदभिप्रेत्यैवात्र, पितेति पदमपहाय गुरुपदमुपात्तमिति सङ्क्षेपः ॥

अयमत्र निष्कर्षः— श्रुतिस्मृतिपुराणेषु सर्वेषां नाम्नां केवलपरत्वप्रतिपादनाद् गुणातीतः परमात्मैव ब्रह्मविष्ण्वादिपदार्थः । ये तु सत्यलोकादिब्रह्मादयस्ते जीवविशेषा एव, न तु परमेश्वरस्य लीलावताराः । अथाशरीरस्य ब्रह्मण एतास्तनवो वायुरादित्यः कालोऽपः प्राणोऽन्नं ब्रह्मा विष्णू रुद्र इत्येके अन्यमभिध्यायन्त्येके अन्यमित्यादिमैत्रायणीयश्रुतावन्यत्र च श्रुतौ ब्रह्मणो मायिकोऽपि देहो नास्ति । अन्यादिदृहा एव देहा इति निर्देशेन ब्रह्मणो मायिकलीलाविग्रहस्याप्यभावावद्योतनात् । अत एव कालीपुराणादौ नृसिंहवराहशरभानां परस्परोपमर्दस्य, शिवस्य नारायणोपदेश्यत्वं मोहपारवश्यादिकम्, अन्यत्र च नारायणस्य शिवोपदेश्यत्वं वृन्दाशापाद्याक्रान्तत्वं मोहपारवश्यादिकम्, शिवनारायणयोर्द्वयोरपि चतुर्मुखोपदेश्यत्वं चतुर्मुखस्याधिक्यञ्च श्रूयते । चतुर्मुखस्य ब्रह्मणो, यो ब्रह्माणमित्यादिभ्यो जीवत्वं श्रुतिस्मृतिषु स्फुटमेव । तस्मात् ते लीलावताराः, किन्तु जीवविशेषा एव उपासनार्थं परमेश्वरा उच्यन्ते इति केचि-

त । तन्न सम्यक् । भक्तानुग्राहकलीलाविग्रहयोधकतापिन्यादिविरोधात् । किन्तु, भूयः सूक्ष्मतयस्तयेशः सर्वाधिपत्यं कुरुते महात्मेतिश्रुतेस्तल्लोकाधिपतित्वेन ब्रह्मविष्णुरुद्रादीनां नानाविधानां स्रष्टृत्वेन परमात्मनः श्रवणात् । नृसिंहरामगोपालतापिनीकैवल्यादिश्रुतिषु लीलाविग्रहस्याप्याम्नानाच्च । ब्रह्मविष्णुरुद्रा द्विविधाः— श्रौताः पौराणाश्चेति । तत्र ये श्रौतास्ते साक्षात् परमेश्वरस्यावताराः । निरवद्यत्वादिश्रवणात् । ये पुनः पौराणाः, ते पुनरविद्यावद्विषयकर्मतत्फलवत्त्वात् संसारिपुरुषविशेषा एव । रागित्वादीनां जीवलिङ्गानां बहुशः श्रवणात् । अत एव न साक्षात् परमेश्वरस्यावतारा यद्यपि तथापि शक्तिशक्तिमदभेदेनोपासनार्थमेव परमेश्वरस्योच्यन्ते, न तत्त्वतः । ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः * ततो न्यूनाश्च मैत्रेय देवा यक्षादयस्तथा ॥ ब्रह्मविष्णुमहेशानां यः परः स महेश्वर इत्यादिस्मृतिभिस्तथाऽवगमात् । अतो येऽपि रामादयस्तेषामवतारास्तेऽपि तथैव । तेषाञ्च सर्वेषां जीवत्वेऽपि परमात्मन्यघाहम्भावादीश्वरावतारत्वं स्मृतिपूच्यते । तेऽपि परमेश्वरशक्तिविशेषरूपतया प्रायः पूर्णत्वाल्लीलयैव बहुविधरूपेणाविर्भवन्ति तिरोभवन्ति चेत्यास्तां विस्तरः । सूचितञ्चैतत् प्रकृतसूत्रेण भगवतः सर्वज्ञत्वेन गुरुत्वप्रतिपादनात् । ब्रह्मादीनाञ्च शिष्यत्वेन ज्ञातोऽज्ञत्वज्ञापनादित्यपरे वर्णयन्ति ॥ तदपि न सम्यक् । भक्तिप्रवर्त्तकतन्त्रपुराणेतिहासादीनामानर्थक्यप्रसङ्गात् । अतो वस्तुतो विचित्रानेकशक्तिमत्त्वेनेश्वरत्वात् सर्वसमर्थस्य भक्तानुग्रहादिनिमित्तं तत्तद्रूपेण स्वेच्छयैव मद्दलपकार्यकर्तृत्वमेवोचितम् । अन्यथा विचित्रानन्तशक्तिमत्त्वादिरूपेश्वरत्वानुपपत्तेः । अतो द्वैविध्ये नानाभावादवतारिणोऽवतारेभ्योऽधिकत्वेन गुरुत्वव्यपदेशस्यापि सम्भवात् । मैत्रायणीयश्रुतौ तु स्वाद्वाद्यारब्धभोगार्हशरीरोपाधस्यैव विवक्षणान्न कोऽपि दोष इति न तथा । तथाहि । यद्यपि, एकमेवाद्वितीयम्, एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेत्यादिश्रुतिभिर्निर्गुण एकरूप एव, तथापि, एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति, अजायमानो बहुधा विजायते इत्यादिश्रुतिभिरन्तर्यामिबहिर्यामिभेदेन द्विविधः । तत्राऽन्तर्यामी अन्तः स्थित्वा प्रेरकः । एष त आत्माऽन्तर्याम्यमृत इति श्रुतेः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन

तिष्ठतीति स्मृतेश्च । स च चिदचितोः प्रेरकत्वाच्चिदन्तर्यामी, अचिदन्तर्यामी चेति द्विविधः। उपासकानां सविग्रहः प्रतिभाति, अन्येषां तु चिन्मात्ररूपेणापि प्रतिभाति। बहिर्यामी बहिः स्थित्वा नियामकः। यथाऽवतारादिः प्रसिद्धः शास्त्रलोकयोः। सोऽपि नित्यविभूतिनिलयो लीलाविभूतिनिलयश्चेति द्विविधः । तत्राद्योऽवतारी प्रागुक्तः । द्वितीयोऽपि व्यूहावतारभेदेन द्विविधः । तत्र व्यूहो वेदादिप्रदातृत्वादिमात्रसम्पादकगुणद्वयमात्रव्यञ्जकविग्रहवान् । स एव ब्रह्मादिरूपः सन् सर्वदेहेषु व्याप्य स्थितः । सर्गस्थितिप्रलये ब्रह्म स्वयं भवति । षाड्गुण्यपरिपूर्णोऽसौ वासुदेवः सनातनः * त्रिधा कृत्वात्मनो रूपं चतुर्धा कुरुते जगत् ॥ अन्तर्यामित्वमापन्नः सर्गं सम्यक् करोति हीत्यादिस्मृतेः। अवतारस्तु स्वसङ्कल्पपूर्वकपराधीनव्यक्तीकृतदेहो भक्तवात्सल्याद्यनेकगुणोल्बणः । माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद * सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसीत्यादिभगवदुक्तेः। सोऽपि विभवार्चादिभेदेन द्विविधः। तत्र विभवावतारो गमनागमनसंश्लेषविश्लेषयोग्यं यथा भवति तथा दिव्यं देहं प्रकटयन् स्थितः। सोऽपि स्वरूपावेशभेदेन द्विविधः। तत्र स्वरूपावतारः सर्वेश्वरः स्वीयाप्राकृतरूपमितरसजातीयतया प्रकटयन् स्थितः। सोऽपि मनुजामनुजभेदेन द्विविधः । तत्र मनुजो रामकृष्णादिर्नराकृतिः। गूढं परं ब्रह्म मनुष्यलिङ्गमित्यादिप्रमाणात्। अमनुजस्तद्व्यतिरिक्तो देवतिर्यगादिः यथोपेन्द्रमत्स्यादिः। आवेशावतारोऽपि स्वरूपशक्त्यावेशभेदेन द्विविधः। तत्र स्वरूपावेशावतारः केषुचिच्चेतनेषु स्वेन सन्निधीभूय स्थितः। शक्त्यावेशावतारः, तथैव शक्त्या सन्निधीभूयस्थितः । तत्राद्यः कपिलानन्तव्यासपरशुरामप्रभृतिः। द्वितीयः पृथुधन्वन्तरिप्रभृतिः । स्वशक्तिलेशात्तभूतसर्ग इत्यादिस्मृतेः। एवं, यद् यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा * तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवमित्यादिना भगवतोक्ता आधुनिका अपि महानुभावा मन्तव्याः। अर्चकपराधीनात्मस्थितिः सोऽपि गृहायतनभेदाद् द्विविध । तत्र गृहार्चावतार उपासकैर्गृहदेवालयादौ पूज्यत्वेन स्थापिता मन्त्रादिसंस्कृता मूर्त्तिः। अवतारत्व तु तस्मिन् मन्त्रादिबलतः सन्निधीभूय भगवतोऽवस्थानात्। आयतनार्चावतारस्तु शालग्रामादिषु स्वसंकल्पा-

शिता सन्निधीभूय स्थिताः । अत एव तेषां परमात्मत्वेन पूजातः फललाभ उच्यते शास्त्रेषु । अयं विशेषः। यद्यपि चराचरेषु सर्वेष्वपि स एव शक्त्या सन्निहित इति सर्वस्य तदात्मत्वमुक्तं विष्णुपुराणादिषु, एकः समस्तं यदिहाऽस्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत् * सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमित्यादिना । तथाऽपि विचित्रकार्यानुकूलशक्त्या तेष्वसन्निधानान्न तेषामवतारत्वव्यपदेशः, किन्तु जीवत्वेनास्मदादितुल्यानामपि पृथुप्रभृतीनामेव विचित्रशक्तिदर्शनात् । कृष्णादीनां तु न शक्त्यावेशमात्रेण तथात्वम् । उक्तप्रमाणविरोधात् । सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनभूरुहतलासीनमित्यादिश्रुत्या स्वरूपविभवावतारत्वज्ञापनाच्च । एवं ब्रह्मविष्णुरुद्राणामपि बोध्यम् । शास्त्रप्रामाण्यात् । अवतारत्वादेव च ब्रह्मादीनां रामादीनां च, लोकवत्तु लीलाकैवल्यन्यायेन स्वीयमैश्वर्यं प्रकटयितुं मनुष्यादिलिङ्गैर्व्यवहरणेऽपि शिष्यत्वेऽपि च न हानिः । जीवलिङ्गानां तेषामन्यथासिद्धत्वेन जीवत्वासाधकत्वात् । अत एव तत्रैकतरालम्बनेनान्यतरस्यापकर्षं वर्णयतां दुर्गतिरपि । एतदभिप्रायेणैव श्रूयते वायुपुराणादिषु । तपसा तोषयित्वा तु पितरं परमेश्वरम् * ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ॥ कल्पान्तरे पुरा ब्रह्मा विष्णुरुद्रौ जजान ह * विष्णुश्च भगवाँस्तद्वद् ब्रह्माणमसृजत् पुनः ॥ नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः * एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ॥ परस्परस्माज्जायन्ते परस्परजयैषिणः * तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥ प्रभावः कथ्यते तेषां परस्परसमुद्भवात् * अयं परस्तथा नेति संरम्भाभिनिवेशिनः * यातुधाना भविष्यन्ति पिशाचाश्च न संशय इत्यादिना । एवं गीतायां रामकृष्णादीनामपकर्षप्रतिपादने श्रूयते निन्दा, अवजानन्ति मां मूढा मानुषीं तनुमाश्रितमित्यादिना । स्वरूपविभवावतारत्वेन तद्भेदापकर्षादिप्रतिपादनस्यान्याय्यत्वादित्यभिप्रायात् । एतेन यथा भूमौ बीजाङ्कुरद्रुमाः । द्रुमे च फलशालादयः । तथा शुद्धचैतन्ये परमात्मनि ईशसूत्रविराजः विराजि च मत्स्यकूर्मकृष्णादयोऽस्मदादयश्च । यथा फलान्तर्गते बीजे द्रुमप्रसवसामर्थ्यमस्ति, न शालाद्यन्तर्गते। एवं कृष्णादिषु जगत्सृष्टिसामर्थ्यं, नास्मदादिषु । यथा बीजादयो भूमाद्याः सत्ताविशिष्टशक्तियोगाद् भूमा-

पूरितो घटकुड्यादिभावं प्रतिपद्यन्ते एवमीशादयोऽपि चिन्मात्रा एव सन्तो मायाशक्तियोगाच्चिदापूरिताः सूत्रादिभावम् । तत्रास्मदादीनां कृष्णादिभावः कीटभृङ्गन्यायेन भावनाजन्यः । विराजादिभावस्तु लवणोदकन्यायेन मनःप्रणिधानप्राप्यः । उपादानोपादानभावस्याभावसत्त्वाभ्यां तथाऽवगमादिति कल्पनं न प्रामाणिकमित्यपि मन्तव्यम् । ईशलिङ्गानां बलवत्त्वादित्यास्तां विस्तरः ॥ २६ ॥

इदानीं परमेश्वरं निरूप्य तत्प्रणिधानं व्याख्यातुं प्रणिधानाऽङ्गमन्त्रमाह—

## तस्य वाचकः प्रणवः ॥ २७ ॥

तस्य निरुपाधिकस्येश्वरस्य प्रणवः अखण्डोङ्कारः, वाचकः रूढ्या बोधकं नाम संज्ञारूपकम् । अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः * तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति इति योगियाज्ञवल्क्यादिस्मृतेः । ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति भगवदुक्तेश्च । अदृष्टविग्रहः अश्रुतशरीरः, भावग्राह्यः भक्तिग्राह्यः । अत एव मनोमयः मनोऽभिलषिताकारः । अथवा तस्य स्वेच्छयाङ्गीकृतविग्रहावच्छिन्नस्य ब्रह्मादिमूर्तित्रयात्मकत्वेन श्रुतस्येश्वरस्य प्रणवः, अश्च उश्च मश्चेत्यकारात्मा अखण्डोङ्कारः । अकारं च उकारं च मकारं च प्रजापतिः * वेदत्रयात् समुद्धृत्य ओङ्कारं निर्ममे पुरा इति मनूक्तेः । वाचकः प्रत्येकशक्त्या बोधकं नाम यौगिकम् । अकारं ब्रह्माणम्, उकारं विष्णुं, मकारं रुद्रमिति श्रुतेः । अत्र प्रतिपाद्यस्यांशस्यैकत्वेऽपि पदार्थतावच्छेदकानां भेदेन रूढः । तस्यैव प्रातिभासिकभेदेन वा रूढः । तत्र भेदाभेदयोस्तु मानं, ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तास्त्रीणि वा विभक्तानीत्यादिश्रुतिः । अखण्डाऽर्थपक्षे तु तस्य जीवपरयोरभेदरूपाखण्डार्थस्य परमात्मनः प्रणवः, अखण्ड एवोङ्कारः, वाचकः । अकारस्य जीवे, मकारस्य ब्रह्मणि, उकारस्य भेद इति प्रत्येकशक्त्या बोधकं नाम यौगिकमेव । अकारेण ममात्मानमाग्नियम्य मकारेण ब्रह्मणा अनुसंदध्यादुकारेणाविचिकित्सन्नित्यादिश्रुतेः । अत्र समस्तव्यस्तं— त्वां शरणद गृणात्योमिति पदमिति स्मृतेः । सर्वेषां पक्षाणां युक्तत्वेऽप्ययं पक्षो युक्ततमः । तत्त्वमसीत्यादिमहावाक्यबोधिताभेदस्य लाभात् । तापिन्यादौ तथैव

व्युत्पादितश्च । अत एवाऽऽरब्धात् सम्बन्धे प्रणवोङ्कारो मनुनाऽभ्यावर्तनः तन्त्रे च, हंस इत्यजपां नित्यं श्वासप्रश्वासगां बुधः ॥ विपरीतां तु तां कृत्वा सोऽहमेकत्वसिद्धये ॥ अन्योऽन्यं सहयोर्लोपात् सिद्धय-स्योङ्कारशब्दकः ॥ अपूर्वोऽयमुपास्याय प्रह्व सद्यो भवेश्वरः ॥ कम-लोऽस्य यतेरेव सहकञ्चुकित पुनः ॥ उपास्योऽयं मनुष्याणां सर्वे-षां यतिनां मत इत्यभेदार्थकोऽजपामूल उक्तः । अस्मिन् पक्षे च अभ्यासाबुद्धेस्त्यादिकर्मधारय एव । अभेदस्य प्रतिपाद्यिषितत्वात् ॥

अत्रायं निष्कर्षः । प्रणवो न गवादिवत् केवल, रूढं नाम । अवयवशक्त्याऽवयवार्थस्यापि बोधनात् । नापि पाचकादिपदवद्यौ-गिकमेव । रूढ्याऽखण्डितार्थस्यापि बोधनात् । नापि पङ्कजादिपदवद् योगरूढम् । यौगिकार्थान्वितरूढ्यर्थावच्छिन्नस्यैकस्याबोधनात् । नापि चैत्रादिपदवच्छरीरशक्तविष्ण्वादिपदपर्यायाणाम् अकारादीनामपि शरीरशक्तानामात्मनि लाक्षणिकत्वात् तद्वदोङ्कारो लक्षकं नाम सर्वं वेत्ति विष्णुरित्यादौ ज्ञाताश्रयत्वस्य शरीरे बाधेन विष्ण्वादिपदाना-मात्मन्येव शक्त्यङ्गीकारात् तत्पर्यायाणामपि अकारादिपदानामात्मनि शक्तेरेवाङ्गीकारात् । ओङ्कारजिविष्टाकारादीनां शास्त्रगृहीतसङ्केतेन अज्ञातार्थज्ञापकानामसति बाधके बलवत्तरे लाक्षणिकत्वायोगाच्च । न विधौ पर. शब्द इति न्यायात्, तस्मान्मण्डपादिपदवद् रूढयौगि-कम् । समुदायशक्त्यवयवशक्तिभ्यां प्रत्येकमेवरूढ्यर्थावयवार्थयोर्बोध-जननात् । यथा मण्डपपदं मण्डपे शेते इत्यादौ समुदायशक्त्या स्थ-ण्डिलमेव बोधयति, न मण्डपायिनम् । मण्डपं भोजयेत्यादौ त्ववय-वशक्त्या मण्डपायिनमेव बोधयतीति न स्थण्डिलम् । एवं प्रणवोऽपि समुदायशक्त्या निरुपाधिकमेवेश्वरं बोधयति, प्रत्येकशक्त्या ब्रह्मा-दीन् अभेदश्च बोधयतीति दिक् ॥

अत्र प्रणवस्य वाचकत्वकथनादीश्वरो वाच्य इति लब्धम् । सोऽयं वाच्यवाचकताभावः स्वरूपसम्बन्धविशेषोऽतिरिक्तो विभाग-रूपो वा, योऽर्थः स शब्दः, यः शब्दः सोऽर्थ इति शब्दार्थयोस्तादात्म्या-न्योन्याभेदाध्यासरूपेणेश्वरसङ्केतेन, ओमित्येतदक्षरमिदं सर्वम्, ओमित्येकाक्षरं ब्रह्मेत्यादिश्रुतिस्मृतिमूलकेन द्योत्यते । न तु नैया-यिकानामिव जन्यते । ईश्वरस्य स्वतन्त्रतया सर्गान्तरे तदीयसङ्केत-भेदेन शब्दार्थभेदप्रसङ्गात् । एतन्मते च सत्कार्यवादस्याङ्गीकारात्

सम्बन्धस्य सदा समानरूपतया प्रलयेऽपि विद्यमानस्य सर्गान्तरे प्रकाशनान्न दोष इति संक्षेपः ॥

ननु भवत्वेवं वाच्यवाचकभावस्तथाऽपि कथं प्रणवस्यैवात्राऽऽदरः। नच परमात्ममन्त्रत्वविशेषादितिवाच्यम् । सगुणशिवरामाऽऽदीनामपि परमात्मत्वेनैवोपास्यतया तत्तदाराधनसाधनप्रणवान्यमन्त्राणामपि परमात्ममन्त्रत्वस्य तत्तद्रूपाकर्षणरूपफलस्य च अविकस्य तत्तत्तापिन्यादिषु प्रतिपादनात् । अतस्तद्वाचकस्तन्मन्त्र इत्येव वक्तुं युक्तमितिचेत् सत्यम् । यद्यप्येवं तथाऽपि तद्यथा शङ्कुना सर्वाणि पर्णानि संतृणान्येवमेवोङ्कारेण सर्वा वाक् संतृण्णा इति श्रुत्या ऋग्वेदः स्यादकाराद्य उकारान्तं यजुर्मतम् * सामवेदो मकारान्तः सर्वग्राही ततो भवः ॥ षडङ्गन्यायमीमांसा पुराणं स्मृतिपूर्वकम् * वेदेऽन्तर्भूतमेव स्यात् सर्ववेदाश्च तारगाः * अद्वयोर्मध्यगा वर्णा लक्ष्मी कमलगो यतः ॥ अकारः प्रकृतिस्तत्र इकारःप्रकृतिर्मता* तथा प्रणवगोकारो जीवात्मा पुरुषः स्मृतः ॥ उकारः प्रकृतिरूपत्वात् प्रकृतिः सहरूपिणी * पुम्प्रकृत्यात्मका वर्णास्तस्मादुमध्यगाः सदा ॥ क्षराऽक्षरपरो देवो मकारः परमेश्वर इत्यादिस्मृत्या च सर्वेषामानुपूर्वीविशेषविशिष्टवर्णरूपाणां मन्त्राणां प्रणव एवान्तर्भावितत्वात् तदाराधनेनैव सर्वाराधनतत्फले स्त इत्यभिप्रेत्य, एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः यश्छन्दसाम् ऋषभो विश्वरूपः। ओमितीदं सर्वं, सर्वे वेदा यत् पदमामनन्ति, एतदालम्बनं श्रेष्ठं धनुर्गृहीत्वोपनिषदं महास्त्रं प्रणवो धनुः, एतद्वै महोपनिषत्, ब्रह्मसंस्थोऽमृतत्वमिति, प्रणवेनैव तस्मिन्नवस्थिता ओङ्कारे परे ब्रह्मणि पर्यवसितो भवेत् प्रणवमेवानुसन्दध्यादित्यादिश्रुतिभिः श्रेष्ठत्वमभिसन्धाय तस्यैव मुमुक्षुजनाराध्यत्वप्रतिपादनात् । उदाहृतयाज्ञवल्क्यस्मृतौ, मनोमयस्तेनाहृत इति पदाभ्यां ध्यानविशेषयोगेन तत्तद्रूपाकर्षकत्वज्ञापनाच्च सर्वमन्त्ररूपत्वसर्वमन्त्रफलदातृत्वादिहेतुभिः सर्वाधिकोऽयमेवेति, तस्य वाचकस्तन्मन्त्र इति । विहाय तस्य वाचकः प्रणव इत्युक्तम् । अन्ये मन्त्राश्चैतन्मन्त्रव्याख्यारूपा अधिकारिविशेषाराध्यरूपा इत्यनवद्यम् । उपाधिभेदेनाऽप्युपास्यभेदो व्यावहारिकोऽपि नास्ति । नात्र काचन भिदास्ति, नैवात्र काचन भिदाऽस्तीत्यादिश्रुतेरिति सूचयितुं तस्येति व्यस्तैकवचननि-

देशः । तस्य वाचक ॐमितिविहाय तस्य वाचकः प्रणव इति निर्देशस्तु ॐमित्यस्यातिरहस्यत्वेन गोप्यत्वाय । अथ कस्मादुच्यते प्रणवः ? यस्मादुच्चार्यमाण एव ऋग्यजुः सामाऽथर्वाङ्गिरसः ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणव इति प्रणवशब्दंव्युत्पादयन्त्याः श्रुत्या अनुसारात् तत्तदर्थकमन्त्रान्तरेणाऽपि यद्वीभावसूचनायेति दिक् ॥ यद्यप्येवं तथाऽपि, तज्जप इत्यत्र लक्षितलक्षणया प्रणवोपस्थापितस्य ॐमित्यस्यैव मुख्यतया ग्रहणम् । अथ कस्मादुच्यते ॐङ्कार इत्यादिश्रुत्या तस्यैव विशिष्टफलदत्वेन मन्त्रराजत्वेन चाभिविक्तत्वादिति दिक् ॥ २७ ॥

एवं वाचकमुक्त्वा तेनैव समाधिगम्यस्य परमात्मनो मानान्तराऽविषयस्य भावने तदनुसन्धानं विना न सम्भवतीति तदनुसन्धानरूपं जपं स्वजप्यादृष्टेन दुरितनिवृत्यात्मप्रकाशायावद्यमावर्त्तनीयं प्रथमतस्तदनु चाऽनुग्रहद्वारा आत्मप्रकाशकमर्थभावनरूपं प्रणिधानमाह—

## तज्जपस्तदर्थभावनम् ॥ २८ ॥

तज्जप इति तस्य प्रणवस्य जपः विधिवदुच्चारणं, तदर्थस्य प्रणवार्थस्य अचिन्त्यैश्वर्यशक्तियुक्तस्य परमात्मनो भावनं प्रकृतितत्कार्यपुरुषेभ्यो विवेकेनानुसन्धानम् । व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्तिताः * अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैरित्यादिगरुडवाक्येभ्यः । अथवा तदर्थस्य परमात्मनः पूर्णस्य भावनं जीवाभेदेन पुनः पुनश्चेतसि निवेशनम् । तमेतमात्मानम् ॐमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकृत्य इति श्रुतेः। वस्तुतस्तु, अकारेण ममात्मानमन्विष्य मकारेण ब्रह्मणाऽनुसदध्यात् उकारेणाऽविचिकित्सित इत्यादिश्रुतेस्तदर्थस्य जीवपरमात्मनोरभेदस्यैतन्मते द्रव्यगुणयोरिवाविनाभावरूपस्य भावेन चिन्तनमित्यर्थः । जपपूर्वकं भावनं कर्त्तव्यम् । प्रणवेन परं ब्रह्म ध्यायीत नियतो यतिः * जपेच्च प्रणवं नित्यं ब्रह्मविष्णुशिवात्मकम् ॥ कोटिसूर्यसमं तेजो ध्यायेदात्मनि निर्मलमित्यादिस्मृतेः । तदेवं भक्तियोगेन भगवदनुग्रहस्ततः परवैराग्यादसम्प्रज्ञातसमाधिलाभः ॥ २८ ॥

किञ्च, जप इत्यनेन मन्त्रयोगः, अर्थभावनमित्यनेन विवेकज्ञाना-

ऽभ्यासरूपो ज्ञानयोगः, अभेदभावरूपोऽद्वैतयोगश्च संगृहीतः । त्रिविधस्याप्येतस्य प्रणिधानस्य फलसकारणताकस्योचितकर्मादिसुसमाध्यन्तसाधनं विनाप्यनुपदमेव वक्ष्यमाणरीत्या साक्षात्परम्परया वा धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयसाधनत्वमस्तीत्यावश्यकत्वमभिप्रेत्य फलान्तरमाह—

## ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥२९॥

ततस्त्रिविधयोगरूपादीश्वरप्रणिधानात् प्रत्यक्चेतनाधिगमः । प्रतीपं विपरीतमञ्चति विजानातीति प्रत्यगत्र भ्रान्तो जीवपदाभिधेयः, चेतनोऽत्र, नित्यो नित्यानां चेतनश्चेतनानामितिश्रुतिप्रमित ईशपदाभिधेयः । तयोरधिगमः साक्षात्कारः । स च तत्र जीवस्य स्वस्य, नास्मि न मे नाऽहमित्याद्याकारो दृढः साक्षात्कैवल्यहेतुः । तमेव विदित्वाऽतिमृत्युमेतीत्यादिश्रुते । विरोधिविषयकत्वेन स्वाज्ञानोच्छेदक्षमत्वाच्च । ईशस्य च सर्वकल्याणगुणपूर्णः सर्वनियन्ता प्रकृतितत्कार्यतदभिमानिपुरुषेभ्यो भिन्न इत्याकारः परोक्षो, वासुदेवः सर्वमित्याकारो वा यथाधिकारं परोक्षोऽपरोक्षो वा दृढो भक्तानुग्रहार्थमभिव्यक्तसाक्षात्कारोऽपरोक्षोऽर्जुनमुचुकुन्दप्रह्लादादीनां श्रीकृष्णनरसिंहरूपो वा यद्यपि न साक्षात्कैवल्यहेतुः सम्भवति । अविरोधित्वेन तस्य तदज्ञाननाशेऽसमर्थत्वात् । तथाऽपि स प्रत्यगात्मनः स्वात्मसाक्षात्कारद्वारा वस्तुतस्तदज्ञानादेव तद्भजनाज्ञातत्कोपेन स्वाऽज्ञानधाराभिर्विविधबन्धदर्शनात् तद्विषयकाज्ञानमेव स्वाज्ञानद्वारा सर्वानर्थहेतुरिति तदज्ञानापनयनेन स्वाज्ञानोच्छेदद्वारा वा कैवल्यहेतुः । ब्रह्मविदाप्नोति परं, ज्ञात्वा देवं मुच्यते सर्वपाशैरित्यादिश्रुतिभिर्बहुशास्त्रस्यापि मोक्षहेतुत्वबोधनात् । पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययावित्ति सूत्रयता व्यासेन तथा ज्ञापनाच्च । वस्तुतस्तयोरधिगमस्तत्त्वमस्यादिवाक्यबोधिताभेदसाक्षात्कारस्तत्त्वंपदार्थयोः शुद्धयोर्न भेद इत्याकार ; शुद्धसत्त्वम्पदार्थो जगत्कर्तृत्वपदार्थोऽविनाभूत इत्याकारो वा विशिष्टाद्वैतसंमतः । भवन्ति ज्ञानिनो नित्यं सर्वतश्च निरागमाः * ऐकात्म्य नाम कश्चिद्धि कदाचित् प्रतिपद्यते इत्यादिमहाभारतवाक्यैस्तस्यैव दुर्लभत्वेनोपादेयत्वज्ञापनात् । अपूर्वाबाधितार्थविषयत्वेनाविद्योच्छेदक्षमत्वाच्च । तत्र त-

तुभयसाक्षात्कारं प्रति समानविषयतया तदुभयार्थभावनस्य युक्तितो हेतुत्वलाभेऽपि केवलं यथाकथञ्चिदभ्यास्तितमीश्वरभावनरूपेश्वरप्रणिधानमेवाऽनुप्रसादादिद्वारा तदुभयसाक्षात्कारहेतुर्भवतीत्यभिप्रेत्य, स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्। ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवदित्यादिश्रुतिभिः. तस्मात् सर्वेषु कालेषु मामनुस्मरेत्यादिभगवद्वाक्यैश्च तदुभयादिसाक्षात्कारसाधनतयाऽवगतमिति मुख्यतया अत्रादरितम्। तस्य च न केवलं मोक्षरूपामुष्मिकफलसाधनतदुभयसाक्षात्कार एव फलम्, अपि त्वैहिकामुष्मिकफलतत्साधनप्रतिबन्धकानां विविधान्तरायाणामभावादिरपीत्याह–*अप्यन्तरायाभावश्चेति*॥वक्ष्यमाणानामन्तरायाणामभावो विनाशः, चकाराद् विविधभोगहेतवः सिद्धयश्च भवन्तीत्यर्थः। तस्य ह न देवाश्च नाऽभूत्या ईशते आत्मा ह्येषां भवतीति। यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते इत्यादिश्रुतेः। तत्रापि, ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानीति श्रुतेः साक्षादन्तरायाऽभावफलकस्य जपस्यात्मसाक्षात्कारो दृष्टद्वारा फलं जनयन् सिद्धिमवाप्नोति। जपतो नास्ति पातकमित्यादिस्मृतिभिस्तथा प्रतिपादनात्। अर्थभावनस्य त्वन्तरायाऽभावो नान्तरीयकं फलम् *लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः* * येषां हृदिस्थो भगवान् मङ्गलायतनो हरिरित्यादिस्मृतिभिस्तथा ज्ञापनात्॥

वृद्धास्तु प्रत्यक्चेतनपदं केवलजीवपरं नयन्तस्तत्साक्षात्कारस्यैवादृष्टद्वारार्थभावनफलत्वं विघ्ननिवृत्तेश्च जपफलत्वं, समुदितस्य समुदितफलत्वं प्राहुः॥ २९॥

अन्तरायानाह–

## व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनाऽलब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः॥३०॥

ये चित्तं तत्फलसाधनेभ्यो योगादिभ्यो विक्षिपन्ति ते विक्षेपा ऐहिकामुष्मिकफलप्रतिबन्धरूपा योगान्तराया नव। तत्र व्याधिः धातुरसेन्द्रियनिमित्तो ज्वरादिः। स्त्यानं चित्तस्य लघुत्वेऽपि

प्राश्नत्यादिना कर्मानर्हता । संशयः, सिद्ध्यति न वेत्युभयकोटिको विपर्ययः । प्रमादः, कामादिः । आलस्यं, योगानुष्ठाने प्रवृत्तिविरोधिकफादिना कायगुरुत्वं, तमसा चित्तगुरुत्वञ्च । अविरतिः, विषयतृष्णा । भ्रान्तिदर्शनम् इदं कर्म न सिद्ध्यति, न चैवेत्येककोटिको विपर्ययः । अलब्धभूमिकत्वं समाधिभूम्यलाभः । मधुमत्यादयः समाधिभूमयो वक्ष्यन्ते । अनवस्थितत्वं लब्धायां भूमौ चित्तस्याऽस्थिरत्वम् । पूर्वभूमौ हि स्थिरं चित्तमुत्तरां भूमिं जयेत् । तस्मादस्थिरत्वं दोषः ॥ ३० ॥

न केवलमेते योगादिसाधनान्तरायाः, किन्तु दुःखादिरूपाऽन्तरायानपि कुर्वन्तीत्याह—

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥

दुःखेति ॥ दुःखं शारीरं मानसञ्चाध्यात्मिकम् । तत्र शारीरं व्याधिवशात् । द्वितीयं कामादिवशात् । व्याघ्रसर्पादिजनितमाधिभौतिकम् । ग्रहपीडादिजमाधिदैविकम् । दौर्मनस्यम् इच्छाविघातात् क्षोभो मनसि । अङ्गमेजयत्वम् अङ्गानां कम्पः । श्वासः बाह्यवायोर्नियमेनाऽन्तःप्रवेशः समाध्यङ्गरेचकविरोधी । प्रश्वासः कौष्ठ्यस्य वायोर्नियमेन बहिर्गमनं पूरकविरोधी । एते विक्षेपसहभुवः । विक्षेपेषूत्पन्नेषु भवन्तीत्यर्थः ॥ ३१ ॥

अथ कृष्यादिवद् बह्वायाससाध्यानां कर्मणां साङ्गानामेव यथोचितफलदातृत्वेन यथाकथञ्चित् क्रियमाणानां फलदातृत्वाभावाच्छ्रमाधनेकदुःखफलकत्वदर्शनाद् वर्णाश्रमाभिमानादिनिबन्धनत्वेन परमश्रेयोऽपघातित्वाच्च नातिप्राशस्त्यं, न वा विद्वदुपादेयत्वं युक्तं, किन्तु भगवद्भजनस्यैवाग्निवदपूर्णस्याप्यस्य, स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति वदता भगवता महाफलत्वप्रतिपादनात् । यथाऽग्निकणोऽतिस्वल्पोऽपि तृणाराशिं ज्वालयँस्तेनैव वर्द्धितः पूर्णः सर्वाणि सूचितानि कार्य्याणि जनयति तथा भगवतो यथाकथञ्चिन्नामोच्चारणादिरूपमपि प्रणिधानम् अजामिलादेरिव पापराशिं नाशयत्, तेन नाशेनैवाधिकं सम्पाद्यमानं श्रद्धादिना पूर्णं भजनीयं इच्छासहकृतं सर्वाभिलषितं साधयति । तस्मात् प्रणिधानमेवावश्यकम् । तच्च चतुर्विधं, परममुख्यं मुख्यं मुख्यजातीयं मुख्य-

कल्पश्चेति तत्राद्यं गोपीनामिव तद्गुणगणश्रवणादिना द्रुतचेतसो द्रुततास्रस्येव दृढतदाकारतातद्विषयकवृत्तिप्रवाहरूपं प्रेम । मय्येव मन आधत्स्व मयि बुद्धिं निवेशयेत्यादिनोक्तम् । अनेन प्रेमभक्तियोगो दर्शितः । स च परमेश्वरचरणारविन्दविषयकैकान्तिकात्यन्तिकप्रेमप्रवाहोऽनवच्छिन्न इत्यर्थः । द्वितीयं तदसामर्थ्ये बहिः प्रवृत्तिस्वभावस्य मनसः प्रत्याहारेण पुनः पुनर्भगवत्यात्मनि निवेशनरूपोऽभ्यासो निदिध्यासनाख्यः । अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् * अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जयेत्याद्युक्तम् । तृतीयन्तु तदसामर्थ्येऽपि तत्प्रतीतिफलकनामोच्चारणैकादश्युपवासादिरूपं कर्म । अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भवेत्यादिनोक्तम् । चतुर्थं तत्राऽप्यसामर्थ्ये स्वभावत एव कृतानामपि कर्मणां फलेच्छां त्यक्त्वा परमेश्वरे परमगुरावर्पणम् । साधु वाऽसाधु वा कर्म यद्यदाचरितं मया * तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहमिति संकल्पविशेषरूपम् । अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः * सर्वकर्मफलत्यागं ततः कुरु यतात्मवानित्यादिनोक्तं, भगवद्गीताद्वादशाध्याये । अत्र च प्रणिधानशब्देनोक्तम् । तत्र निदिध्यासनं समानविषयतया साक्षात्कारजनकत्वसाधर्म्यं कर्मादियोगेभ्यश्चान्तरङ्गमित्यभिप्रेत्य, अर्थभावनशब्देन पूर्वमादृतं यद्यपि, तथाप्यदृष्टद्वारा कृपातिशयफलकादन्तरायाभावफलकाच्च तस्मात् परमं मुख्यं भक्तियोगं सर्वोपायफलभूतमयमत एव तदुभयफलकप्रेमाख्यमभ्यासमाह—

## तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

तत्प्रतिषेधेति ॥ तेषां विक्षेपाणां प्रतिषेधार्थम् अनायासेन नाशार्थम् एकस्मिँस्तत्त्वे मुख्यभगवति, अभ्यासः गोपीनामिव तद्गुणगणश्रवणादिना द्रवीभूतस्य चेतसो मूषानिक्षिप्तद्रुततास्रस्येव दृढतदाकारतारूपप्रेम, अभ्यासयोगयुक्तेन चेतसा नान्यगामिनेत्यादिना भगवत्सूचितः कार्य्य इत्यर्थः । यद्बलादनायासेन सत्त्वरायां जीवन्मुक्तौ विक्षेपाः प्रशममुपयान्ति । न वासुदेवभक्तानामशुभं विद्यते क्वचिदित्यादिस्मृतेः । अथवा, एकं सजातीयविजातीयस्वगतभेदरहितं तत्त्वमनारोपितमखण्डार्थं इति यावत् । तस्य अभ्यासः

तदेकमजरममृतमभयमिति वृत्तिप्रवाहः कार्य्य इत्यर्थः । अत्रात्मव्यतिरेकेण द्वितीयं यो न पश्यति * आत्मारामः स योगीन्द्रो ब्रह्मीभूतो भवेदिह ॥ आत्मक्रीडस्य सततं सदात्ममिथुनस्य च * आत्मन्येव सुतृप्तस्य योगसिद्धिरदूरतः ॥ अभियोगात् सदाऽभ्यासात् तत्रैव च विनिश्चयात् * पुनः पुनरनिर्वेदात् सिद्ध्येद् योगो, न चान्यथेति स्कान्दोक्तेः । तस्मात् सगुणात्मवस्त्वाकाराकारधारावाहिवृत्तिप्रवाहः सविकल्पो, निर्गुणगोचरो धारावाहिको निर्विकल्पको वा कार्य्योऽनायासेन मोक्षमिच्छतेति यावत् ॥ ३२ ॥

तस्य चित्तस्यासूयादिमलवतो योगासम्भवात् तन्निरासोपायं चर्यायोगमाह—

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

मैत्रीकरुणेति ॥ अत्र सुखादिशब्दास्तद्वत्पराः । तथाच सुखिषु मैत्रीं सौहार्दम् ईर्ष्याकालुष्यनिवर्त्तकं, दुःखिषु करुणां दयामसूयाकालुष्यनिवर्त्तिकां, पुण्यवृत्तिषु हर्षं द्वेषनिवर्त्तकम्, अपुण्यशब्दितपापिषु उपेक्षाम् अमर्षकालुष्यनिवर्त्तिकां भावयेत् । तदेवं चर्यायोगेन चित्तमलनिरासकेन सुख्यादिषु यथाक्रममुक्तभावनारूपेण सात्त्विको धर्मो जायते । तेन च शुक्लेन धर्मेण चित्तं प्रसन्नं भवति । प्रसादे च स्थितिपदं लभते । एतच्च पुष्कले विरक्तस्यैव सम्भवतीति मुख्यचर्यायोगो वैराग्यमेवेति संक्षेपः ॥ ३३ ॥

एवं मैत्र्यादिभावनया प्रसन्नस्य चित्तस्य स्थित्युपायं हठयोगमाह—

प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

प्रच्छर्दनेति ॥ कोष्ठ्यस्य वायोः प्रच्छर्दनम् एकतरनासापुटेन मात्राप्रमाणेन शनैः शनैर्बहिर्निःसारणम् । विधारणं रेचितस्य वायोर्बहिरेव स्थापनं कुम्भकं, न तु सहसा प्रवेशनम् । तथाचात्र पूरकवर्जनाद्रेचितपूरितशान्तप्रत्याहारोत्तराधरसमभेदेन सप्तकुम्भकेषु मध्ये रेचितकुम्भकोऽयं प्रथमाभ्यासेऽङ्कनियमानपेक्षतया प्रशस्तः । सर्वमेतदग्रे प्राणायामप्रकरणे स्फुटीभविष्यति । तदेताभ्यां

प्राणजये चित्तजयस्तयोरविनाभावात् प्राणायामस्य सर्वपापनाशकत्वात् पापनिवृत्त्या च चित्तमत्र लक्ष्ये स्थिरं भवति । वाशब्दः सूत्रे वक्ष्यमाणोपायविकल्पार्थः । प्राणायामस्य हठयोगत्वमुक्तं स्मृतौ— हकारेण तु सूर्योऽसौ ठकारेणेन्दुरुच्यते * सूर्याचन्द्रमसोरैक्यं हठ इत्यभिधीयते॥सूर्यचन्द्राख्ययोः प्राणायामयोरैक्यलक्षणः* हठयोगो योगबीजं प्राणायामः प्रकीर्त्तित इति ॥ ३४ ॥

लक्ष्ययोगस्वरूपमुपायान्तरमाह—

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः
स्थितिनिबन्धिनी ॥ ३५ ॥

विषयवतीति ॥ नासाग्रादौ चित्तस्य संयमरूपाल्लक्ष्ययोगाद्दिव्यगन्धादिसाक्षात्कारो भवति । सेयं विषयवती प्रवृत्तिर्विदुषा समुत्पाद्य परमेश्वरादावतिसूक्ष्मे मनसः स्थितिं सम्पादयतीत्यर्थः । तथाच शास्त्रीयानुभवविशेषे जाते श्रद्धया योगिनो ध्यानादौ स्थिरा भवतीत्ययं लक्ष्ययोगः । या हि नासादिदेशेषु दृष्टिः पुंसां स्थिरा भवेत् * स लक्ष्ययोग आख्यातो योगे भद्राकरः पर इति स्मृतेरिति ॥ ३५ ॥

ब्रह्मयोगं शिवयोगमाह—

विशोका वा ज्योतिष्मती ॥ ३६ ॥

विशोकेति ॥ अष्टदलादौ नादाख्ये ब्रह्मणि मनसः संयोगाद् विशोका बहुतरसाधनायासक्लमदुःखशून्या ज्योतिष्मती ज्योतिर्विषया नादगतचिदानन्दविषया सचित्मनसः स्थितिहेतुरित्यर्थः । तथाह्यत्र क्रमः । हृदयाधोऽधोमुखमष्टदलं कमलं रेचकेणोर्ध्वमुखं विभाव्य तत्र सूर्यमण्डलं द्वादशकलात्मकं जागरितस्थानमकारं, तदुपरि चन्द्रमण्डलं षोडशकलात्मकं स्वप्नस्थानमुकारं, तदुपरि वह्निमण्डलं दशकलात्मकं सुषुप्तिस्थानं मकारं, तदुपरि नादाख्यं तुरीयं ब्रह्म विभावयेदिति ब्रह्मयोगः । तदुक्तं गीतासारे— अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः * ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः ॥ तन्मनो विलयं याति तद्विष्णोः परमं

पदम् ॥ हंसोपनिषदि चोक्तः—हंसानुसन्धानफलभूतोऽनेकविधः सफलः। यस्यैव जपकोट्या नादमनुभावयति यस्तस्य दशविध उपजायते। चिणीति प्रथमः, चिणिचिणीति द्वितीयः, घण्टानादस्तृतीयः, शङ्खनादश्चतुर्थः, पञ्चमस्तन्त्रीनादः षष्ठस्तलनादः, सप्तमो वेणुनादः, अष्टमो भेरीनादो, नवमो मृदङ्गनादो, दशमो मेघनादः। नवमं परित्यज्य दशममेवाऽभ्यसेत्। तस्मान्मनोविलीने मनसि गते संकल्पविकल्पे दग्धपुण्यपापे सदाशिवो मशक्त्यात्मना सर्वत्राऽवस्थितः शान्तः प्रकाशयति इत्यादिना। अतः संगृहीतः कालिदासेनापि—

आनन्दलक्षणमनाहतनाम्नि देशे
नादात्मना परिगतं तव रूपमीशे।
प्रत्यङ्मुखेन मनसा परिचीयमानं
शंसन्ति नेत्रसलिलैः पुलकैश्च धन्या, इति॥

अथवा भ्रूमध्यादौ ज्योतीरूपे प्रत्यगात्मनि बहिर्दृष्टिबन्धेन मनसः संयमाद् विशोका। हठयोगादविद्यायासकृतक्लेशरहिता ज्योतिष्मती साक्षिविषया संविन्मनसः स्थैर्यहेतुरिति शिवयोगः। अयमेव शाम्भवी मुद्रेत्युच्यते। तदुक्तम्—अन्तर्लक्ष्या बहिर्दृष्टिर्निमेषोन्मेषवर्जिता॥ एषा हि शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता। सा च, योगासनचाचरीभूचरीखेचर्यऽगोचरीनिर्वाणमुद्राभिः सिद्ध्यति। प्रकारस्तु गुरुमुखादवगन्तव्यः। यद्यप्यनेनाऽऽत्मसाक्षात्कारेण कृतार्थत्वान्नास्य स्थितिविशेषतयोपन्यासो युक्तस्तथापि कृताऽऽत्मसाक्षात्कारेणाऽपि परवैराग्यार्थमभ्यासापेक्षणात् तथोक्तम्। स्वविषयस्थैर्यहेतुत्वात्स्वान्यविषयकस्थैर्यहेतोः पूर्वयोगाद्भेद इति संक्षेपः॥ ३६॥

अथान्तरव्यासनायोगमाह—

## वीतरागविषयं वा चित्तम् ॥ ३७॥

वीतरागविषयं वेति॥ वीतरागं निर्वासनं यत् सनकादीनां चित्तं तद्विषयं तद्विभावनपरं कुर्यात्। निर्वासनवासितमन्तःकरणं कुर्यादिति यावत्। अनेनात्र योगिनो मुमुक्षालाभेन वासनायोगो दर्शितः। उक्तञ्च स्मृतौ, सत्त्वायलम्बनं यत्तद् बीजं चित्तविशोधनं

* भवेत् स वासनायोगो योगान्तरविघर्त्तक इति । अन्यापि चित्तं स्वभावतः सत्त्वप्रधानमपि तमसा पिहितमस्ति । तत् सात्त्विक-भावनया तमोविगमे लब्धवृत्तिकं भवति । तेजःप्रतिबन्धजलशैत्यव-दिति विनैव साधनान्तरं योगिनो मोक्षसुखनिष्ठासम्भवात् । अयं शुभो वासनायोगो विरुद्धवासनानिवर्त्तक इति ॥ ३७ ॥

वासनायोगस्यावान्तरं भेदमाह—

## स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

स्वप्नेति ॥ अत्र ज्ञानशब्दो ज्ञेयपरः । स्वप्ने भगवतो यद्रूपं प्रियमाराधयन्नेव प्रबुद्ध, एवं निद्रादौ यत्सुखमनुभूयते तदवलम्बनं तद्विभावनपरं चित्तं कुर्य्यात् । पूर्ववासनाप्राप्तसत्त्वप्रधानमेवा-न्तःकरणं कुर्य्यादिति यावत् ॥ ३८ ॥

ध्यानयोगमाह—

## यथाभिमतध्यानाद्वा ॥ ३९ ॥

यथेति ॥ किम्बहुना, हरिरामादिरूपं पारमेश्वरं यद्वा चन्द्र-सूर्यादिज्योतिर्वा यदेवेष्टं तदेव ध्यायेत्। तस्मादपि ध्यानाल्लब्धस्थि-तिकस्य चित्तस्य साधनान्तरं विनापि केवले परमात्मनि स्थितौ योग्यतया भवतीत्यर्थः। अयमेव ध्यानयोग उक्तो योगग्रन्थेषु । विना देशाविबन्धेन वृत्तिर्याभिमते स्थिरा * ध्यानयोगो भवेदेव चित्तचा-ञ्चल्यनाशक इत्यादिना । यद्वा यथाभिमतानां तीर्थदेवलोकवर्णत-त्त्वादीनां यथाभिमतेषु स्वदेहादिषु ध्यानाद् भावनाविशेषान्मनसः स्थितिर्भवतीत्यर्थः । तत्र यद्यपि ब्रह्मविदो ब्रह्ममयत्वादिना सर्वमेव तीर्थं प्रतिलोमकूपं च तीर्थानि भवन्तीति तथापि युञ्जानेन चित्तशु-द्ध्यर्थं प्रथमतस्तीर्थादिकमवश्य भावनीयम् । तद्यथा मूर्द्धनि सह-स्रारे अयोध्या, हृदये अनाहते मथुरा, मूलाधारे माया, भ्रूमध्ये आज्ञाचक्रे काशी, स्वाऽधिष्ठाने काञ्ची, मणिपूरे अवन्ती, कण्ठे विशुद्धे द्वारका, नासाग्रे प्रयाग , इडायां गङ्गा, पिङ्गलायां यमुना, सुषुम्नायां सरस्वती । अन्यासु नाडीषु नर्मदाद्याः सर्वा अपि सरि-तः सन्तीति तत्र तत्राधाराधयभावेनाभेदेन वा तत्तत्तीर्थं भाव्यं तत्तत्तीर्थयात्रार्थम् । एवं शिरसि कण्ठादधो नाभिपर्य्यन्तं नाभेर-

धाचरणपर्य्यन्तं ग्रामत्रयम् । शिरःश्मश्रुहृदयकक्षादिषु सलोकेषु देशेषु चतुर्दशारण्यानि ललाटादिषु रोमकूपेषु नवोपराश्च सन्ति । पुर्य्यादिसविधं चोपपुर्य्यादीनि सन्तीति तीर्थभावना । एतत् स्पष्टं वराहपुराणादौ—

ब्रह्मरन्ध्राद्धोऽयोध्या सहस्रारं तु तद्विदुः ॥
मथुराऽनाहत चक्रं हृदये योगिनो विदु. ॥ १ ॥
मूलाधारं भवेन्माया सर्वाधारयी ततः ॥
आज्ञाचक्र स्मृता काशी जाबालश्रुतिमूर्द्धनि ॥ २ ॥
स्वाधिष्ठान स्मृता काञ्ची मणिपूरमवन्तिका ॥
विशुद्धिद्वारका प्रोक्ता सप्तपुर्य्यो यथाक्रमम् ॥ ३ ॥
आकटे. पादपर्य्यन्तं शालग्राम प्रकीर्तितः ॥
आकण्ठात् कटिपर्य्यन्तं प्रोच्यते हरिमन्दिरम् ॥ ४ ॥
आशिर कण्ठपर्य्यन्तं नन्दिग्रामं प्रचक्षते ॥
दण्डकं गुह्यलामानि सैन्धवं श्मश्रुलोमकम् ॥ ५ ॥
चिबुके जम्बुमार्गं च हृदये पुष्कर स्मृतम् ॥
उत्पलावर्त्तक वामां ध्रुव दक्षां च नैमिषम् ॥ ६ ॥
कुरुक्षेत्रं सुनन्दर्क्षे तत्कक्षां कुरुमण्डलम् ॥
सव्यकक्षामर्बुदश्च विदु. केशान् हिमालयम् ॥ ७ ॥
नवारण्यानि चैतानि शरीरे सन्ति देहिनाम् ॥
रेणुका कण्ठकूपे स्यान्नासिकायां तु शूकरम् ॥ ८ ॥
भ्रुवोर्मध्ये स्थिता काशी तदधो नन्दकाननम् ॥
वामपाणितले काशी कालेशश्च तथोत्तरे ॥ ९ ॥
यदेश पादयोः कालञ्जर स्यात्तु ललाटके ॥
नाभिदेशे महाकाल ऊपरा नवकीर्तिता. ॥ १० ॥
सव्ये नासापुटे कोका गुदे कुब्जाम्रकं स्मृतम् ॥
दक्षेऽर्बुदगिरिर्दन्तपिलं स्यान्मणिकर्णिका ॥ ११ ॥
प्रयागे नासिकाग्रे तु स एव वट उच्यते ॥
इडा वामे स्थिता गङ्गा पिङ्गला यमुना नदी ॥ १२ ॥
यार्णी सुषुम्नां विद्यात्तु परा नाक्य. परा सरित् ॥
शालग्रामस्तु पादाग्रे शूकरं दक्षनासिका ॥ १३ ॥
पुरीतन्मथुरा प्रोक्ता गयाक्षेत्रं मुखं स्मृतम् ॥

लिङ्गं निष्कर्मणं लोहार्गलं दन्ता विनायकः ॥ १४ ॥
जिह्वाग्रे वा हनूसन्धिः प्रभासस्तु प्रकीर्त्तितः ॥
ब्रह्मार्गं बदरीक्षेत्रं गुह्यान्येवं चतुर्दश ॥ १५ ॥
सप्त पुर्य्यस्त्रयो ग्रामा नवारण्योपरास्तथा ॥
चतुर्दशैव गुह्यानि मुक्तिद्वाराणि भूतले ॥ १६ ॥
क्षमातीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः ॥
सर्वभूतदया तीर्थं ध्यानतीर्थमनुत्तमम् ॥ १७ ॥
एतानि पञ्च तीर्थानि सत्यषष्ठानि देहिनाम् ॥
वसन्ति सर्वदेहेषु तेषु स्नानं परं स्मृतम् ॥ १८ ॥ इत्यादि ॥

अथ देवभावना । तत्र स्वप्रकाशचैतन्यानन्दरूपः पुरुषः शिवः । सत्वादिगुणका प्रकृतिः शक्तिः । तदुभयोपादानकत्वात् तन्मयं सर्ववस्तु । एवञ्च चित्ते वासुदेवः, बुद्धौ चतुर्मुखः, अहङ्कारे शङ्करः, मनसि चन्द्रः, श्रोत्रे दिक्, त्वचि वायुः, चक्षुषोः सूर्य्यः । तत्रापि दक्षिणेऽक्षिणि यः पुरुषरूपः स इन्द्रस्वरूप ईश्वरः । वामे यः स इन्द्राणीस्वरूपिणी ईश्वरी । मध्ये च तयोः संमिलतात्तत्रैव नयनतेजोरूपौ भावनीयौ तौ दम्पती । एवं रसनायां वरुणः । घ्राणे अश्विनीकुमारौ, वाचि अग्निः, पाण्योरिन्द्रः, पादयोरुपेन्द्रः, पायौ यमः, उपस्थे प्रजापतिः, तत्र तत्राधाराधेयभावेनानुग्राह्यानुग्राहकभावेनाऽभेदेन वा सा सा देवता भाव्या । एवञ्च तत्तद्व्यापारफलयोः पूर्णता भवतीति देवताभावना ॥ अथ लोकभावना ॥ पादमूले पातालं, पार्ष्णिप्रपदयोः रसातलं, गुल्फद्वये महातलं, जङ्घाद्वये तलातलं, जानुद्वये सुतलम्, ऊरुद्वये वितलं, तलञ्च जघने, नाभौ भुवर्लोकम्, उरसि स्वर्लोकं, ग्रीवायां महर्लोकं, वदने जनलोकं, ललाटे तपोलोकं, मूर्द्धनि सत्यलोकं, बाह्वादिषु शक्रादिदेवताश्चैवं सर्वमयं शरीरं तत्तल्लोकाधीश्वरीपशरीरतया भावयेदिति निष्कर्षः ॥

अथ वर्णभावना । सा च मातृकान्यासरीत्या ॥ अथ षट् चक्राणि । तत्र गुदाद् द्व्यङ्गुलोपरि मेण्ढ्राद् द्व्यङ्गुलादधः कन्दस्थानम् । तदुपरि तप्तचामीकरप्रभं त्रिकोणं कामरूपं तत्त्रिकोणस्य वामकोणे इडा दक्षिणे पिङ्गला मध्ये सुषुम्णा मध्ये चित्रिणी वर्णमयी तद्वर्णविन्यासात् कमलाऽऽकारचक्रनिष्पत्तिः । तथाहि । कामरूपोपरि मूलाधारनामकं चक्रम् । तच्च सुवर्णाभं लयीआन्वितं सावित्री-

सहितब्रह्मसरस्वतीसहितगणेशाद्यधिष्ठितेन चतुष्पञ्चाशच्छिवशक्तिमिथुनवता चतुष्कोणेन पृथिवीस्वरूपेण कर्णिकाकारेण मध्ये भूषित व—श—ष—सात्मकं चतुर्दलम् । तन्मध्ये भास्वराकारम् अधोमुख चिरस्वरूपिण्या सार्धत्रिवलयाकारेण स्थितया विद्युत्प्रभया कुण्डलिन्या स्वमुखेन तन्मुखे मुद्रयित्वा घटितं स्वयम्भूनामक शिवलिङ्गम् । एतच्च भावित सकलयागसिद्धीः पृथिवीजयादिकं ब्रह्मगणेशादिप्रीतिश्च वितरति । यच्च हृदयनाभिप्रदेशादिकं कुण्डलिन्या अधिष्ठानमुक्त तन्मूलाधारादुत्थितायास्तस्या हृदयादौ प्रकटीभावाभिप्रायेणातो न कोऽपि विरोध इत्यास्तां विस्तर. । तदुपरि लिङ्गमूले स्वाधिष्ठाननामक चक्रम् । तच्च सन्माणिक्यसमप्रभं, वबीजान्वितेन लक्ष्मीसहितविष्णवधिष्ठितेन द्विपञ्चाशन्मिथुनवता अर्धचन्द्राकारेण शुभ्रेण जलस्वरूपण कर्णिकोत्तमेन मध्ये भूषित ब-भ-म-य—र—लात्मकपङ्दल भावुकानां विष्णुप्रीतिजलजयादिकारकम् । अथ नाभौ मणिपूरनामकं चक्रम् । तच्च विद्युत्प्रभं रंबीजान्वितेन पार्वतीसहितशङ्कराधिष्ठितेन द्विसमधिकषष्टिसंख्याकमिथुनवता त्रिकोणेन उद्यदादित्यप्रभेण तेज स्वरूपेण कर्णिकोत्तमेन मध्ये भूषित डादिफान्तवर्णात्मकदशदल स्वभावुकानां शंकरप्रीतितेजोजयादिकारकम् । अथ हृदये अनाहतनामक चक्रम् । एतदेव षोडशारषोडशाधारादिनापि आगमादौ प्रसिद्धम् । तच्च धूम्रवर्णं यबीजान्वितेन प्रकृतिसहितेनेश्वराधिष्ठितेन चतुष्पञ्चाशन्मिथुनवता षट्कोणेन प्राणनामकशिवलिङ्गलक्षितेन वायुस्वरूपेण कर्णिकोत्तमेन मध्ये भूषित कादिठान्तवर्णात्मकद्वादशदलम् । एतच्च भावित प्रकृतीश्वरप्रीतिवायुजयादिकारक कण्ठे विशुद्धनामक चक्रम् । तच्च श्वेतम् हबीजान्वितेन अर्धनारीश्वरस्वरूपसदाशिवाद्यधिष्ठितेन द्विसप्ततिमिथुनवता वृत्ताकारेण सुधांशुप्रभेण कर्णिकोत्तमेन मध्ये भूषित स्वरीयवर्णात्मकषोडशदल भावित भावुकानां सदाशिवप्रीतिनभोजयादिकारकम् । भ्रूमध्ये आज्ञानामक चक्रम् । तच्च मुक्ताकार क्षबीजान्वितेनाविद्यासहितजीवाधिष्ठितेन शृङ्गाटकाकारेण चतुष्षष्टिमिथुनवता मनोरूपेण कर्णिकोत्तमेन मध्ये भूषित हकारलकारात्मकवर्णद्वयदल भैरवानन्दनाम्ना इतरेण शिवलिङ्गनापलक्षित स्वभावुकानामात्मप्रीतिमनोजयादिकारक पादादिजानुपर्यन्त पृथ्वीकल-

बीजात्मकविशेषणविशिष्टं पृथ्वीस्थानम्। एवमाजान्वोः पायुपर्यन्तम् अपां स्थानम्। आपायोर्हृदयपर्य्यन्तं तेजःस्थानम् । आहृन्मध्याद् भ्रूपर्य्यन्तं वायुस्थानम्। तदूर्ध्वम् आकाशस्थानमिति याज्ञवल्क्य-गीतादावुक्तम्। सर्वत्र सर्वस्याङ्गीकाराद्भावनातो विशेषोपपत्तेरवि-रुद्धं ज्ञातव्यम् ॥

मूर्द्धनि सहस्रदलं कमलम्। तत्र शशिप्रभस्य गुरोः परमा-त्मनः स्थानम्। ललाटमध्येऽहङ्कारस्य ललाटोपरि बुद्धितत्त्वस्य तदु-परि प्रकृतेः सहस्रदले पुरुषस्य स्थानमिति प्रपञ्चितं योगग्रन्थेषु विस्तरभयान्न लिख्यते ॥

अथानाहतसविधे कन्दमध्यात् समुत्थितं द्वादशाङ्गुलनालं चतुरङ्गुलमधोमुखमप्यूर्ध्वमुखत्वार्थम् ऊर्ध्वमुखं भाव्यम्। दहरनामक-मष्टदलं कमलम् । तत्र प्राणायामप्रेरितः पूर्वकर्म्मवासनाबद्धो वि-ज्ञानौजःस्वरूपो जीवो दिवानिशं भ्रमति। तत्र भ्रमणक्रमः। पूर्वदलस्य वामोर्ध्वमूलमारभ्य पत्राग्रपर्य्यन्तं त्रिंशच्छ्वासपर्य्यन्तमाकाशतत्त्व-माश्रित्य जीवो भ्रमति । अथ षष्टिश्वासपर्य्यन्तं वायुतत्त्वं, नवति-श्वासान्तं तेजस्तत्त्वं, विंशत्यधिकशतश्वासान्तं वारितत्त्वं, पञ्चाशद-धिकशतश्वासान्तं पृथिवीतत्त्वम् । एवमेकैकस्मिन् पत्रार्द्धे सार्द्ध-चतुःशतश्वासा भवन्ति । एवमपरार्द्धे पत्राग्रादारभ्यामूलपर्य्यन्तं प्रथमं सार्द्धशतश्वासान् पृथिवीतत्त्वम्। ततो विंशत्यधिकशतश्वा-सान् वारितत्त्वं, नवतिश्वासांस्तेजस्तत्त्वं, षष्टिश्वासान् वायुतत्त्वं, त्रिंशच्छ्वासान् आकाशतत्त्वमाश्रित्य भ्रमति । एवं सम्पूर्णपत्रे नव-शतानि श्वासानां भवन्ति । एवमेव दलाष्टकभ्रमणे शतद्वयाधिक-सप्तसहस्रसंख्याकाः श्वासा भवन्ति। एवंविधभ्रमणेन वारत्रयमहो-रात्रेण भ्रमति । तेन षट्शताधिकैकविंशतिसहस्रसंख्याकाः श्वासा भवन्ति। आह चैवं गोरक्षनाथोऽपि— षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः * हंस हंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ॥ हकारेण बहिर्याति सकारेण विशेत् पुनरित्यादि । एताभिः श्वा-सैः षष्टिघटिका भवन्ति। तथाहि । गुरुदशाक्षरोच्चारणकालेन प्राय-शः साधारणजनस्यैकः श्वासो भवति। षष्टिश्वासैरेकं पलं भवति षष्ट्यधिकशतत्रयसंख्याकैः श्वासैरेका घटिका भवति। षष्टिघटिका-भिरहोरात्रम् । षष्ट्यधिकशतत्रयाहोरात्रैर्वत्सरः । एवं प्रतिपुरुष

श्वासनिर्गमवैचित्र्याद् वत्सरादि पृथगिति मन्तव्यम् । अत एव प्राणायामैरायुर्वृद्धिः । अत एव कल्पायुषोऽपि शतवर्षायुष प्रोच्यन्ते स्वस्वकल्पस्य तदीयश्वासघटितसंवत्सरज्ञानकत्वात् । ज्योतिःशास्त्र-सिद्धायुर्दाय एतत्क्रमेणैव । अत एव कदाचित् साधारणवत्सरक्रमेण न मिलत्यपि ॥

अथ पूर्वादिदिग्दलचरे श्वसने यादृशी मनोवृत्तिर्भवति तादृशी तत्र तच्छ्वसनसञ्चारज्ञानायोच्यते । तथा च हंसोपनिषदि । एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिर्भवति । आग्नेये निद्रालस्यादयो भवन्ति । याम्ये क्रौर्ये मतिः । नैर्ऋत्ये पापे मनीषा । वारुण्यां क्रीडायां मतिः । वायव्ये गमनादौ बुद्धिः । सौम्ये रतिप्रीतिः । ऐशान्ये द्रव्यादानम् । मध्ये वैराग्यम् । केसरे जाग्रदवस्था । कर्णिकायां स्वप्नम् । लिङ्गे सुषुप्तिः । पद्मत्यागे तुरीयमित्यादि । अत एव कृताभ्यासा योगिन आकाशतत्त्वबहुलसमानपवनमेव पत्रान्तरगमनावान्तरकालीने पत्रद्वयान्तरीये श्वसनसञ्चारे जायमाने क्षणमात्रं ब्रह्मानन्दोद्बोधे प्रादुर्भूते तत्र मनः स्थिरीकुर्वन्ति । यथा मनः पत्रद्वयान्तर एव श्वसनविशिष्टे जीवे स्थिरो भवति । ततश्चानवरतं ब्रह्मानन्दोद्बोधो भवति । अत एवैश्वर्यादिलक्षणेन्द्रादिगुणार्थिनो योगिन इन्द्रादिदल एव श्वसनविशिष्टं जीवं स्थिरीकुर्वन्ति । स्थिरीकरणोपायस्तु तत्तद्दलस्थश्वसनसञ्चारकालीनायाः पूर्वोक्तायास्तत्तद्दिक्पालनानुरूपाया इन्द्रोऽहमस्मीत्याकारिकायाश्च मनोवृत्तेरनवरतमाश्रयणम् । यावच्चेन्द्राद्यनुरूपा मनोवृत्तिराश्रीयते तावत्तद्देवदिग्दलश्वसनविशिष्टो जीवस्तिष्ठति । एवमेव वक्ष्यमाणाऽऽकाशादिगुणविशिष्टा यावत्पर्यन्तं मनोवृत्तिस्तावत्पर्यन्तं तत्तत्त्व एव तथाभूतो जीवस्तिष्ठतीति गुरुपरम्परागतयोगिनां सङ्केतः । आकाशादितत्त्वबहुलपरीक्षा त्वेवम् । यदाकाशतत्त्वमाश्रित्य जीवः श्वसनप्रेरितः प्राचीनकर्मविशेषवासनाविशेषादिबद्धो रज्जुबद्धः श्येनादिरिव भ्रमति तदा नासाविवरनिर्गतश्वसनः अनुष्णाशीतस्पर्शो वर्तुलाकारो द्वादशाङ्गुलादपि दीर्घः । नासाग्रस्थितकरतलादिव्यापकायासौ रक्तश्वेतश्यामादिसंमिलितोद्भूतकर्बुरवर्णो जायते । नासाग्रस्थिते च दर्पणे श्वाससम्बन्धेनापशाया मलिनच्छायायाः क्रमाद्दर्पणमध्ये सङ्कोचमागच्छन्त्या वर्तुला-

कारतया परिणामो वर्णश्च कर्बुरः स्फुटमभिव्यज्यते । एवं वायुतत्त्ववहने श्वसनोऽसावनुष्णाशीतस्पर्शः षट्कोणाकारो मध्याङ्गुलो नासाग्रस्थितकरतलादौ तिर्यग्वहनाधिगतो धूम्रवर्णश्च जायते । पूर्ववद्दर्पणमलिनच्छायायाः संकुचन्त्या षट्कोणाकारता धूम्रवर्णश्च प्रकटमुपलक्ष्यते । एवं तेजस्तत्त्ववहने श्वसन ऊष्मो रक्तस्त्रिकोणाकारः षडङ्गुलो नासाग्रस्थितकरतलादेरूर्ध्वभागस्पर्शी जायते।दर्पणच्छायायाश्च रक्तता त्रिकोणता चोपलक्ष्यते । एवं जलतत्त्ववहने श्वसनः शीतलोऽर्धचन्द्राकारः श्वेतवर्णः षडङ्गुलादपि न्यूनगतिः । नासाग्रस्थितकरतलादेरधोभागस्पर्शी उपजायते । दर्पणमलिनच्छायायाश्चार्धचन्द्राकारता श्वेतवर्णश्चोपलक्ष्यते । एवं पृथिवीतत्त्ववहने श्वसनोऽनुष्णाशीतस्पर्शः पीतवर्णश्चतुष्कोणो गुरुर्नासाग्रस्थितकरतलादौ मध्येऽभिव्यक्तोऽल्पगतिश्च जायते । दर्पणमलिनच्छायासु चतुष्कोणाकारतापीतवर्णश्चोपलक्ष्यत इत्यादि गुरूपदेशाज्ज्ञातव्यम् । वहननाड्यौ तूत्सर्गत इडापिङ्गले । तत्रेडा वामनाडी । तस्यां श्वसनप्रवाहश्चन्द्रसंज्ञः । शक्तिरूपः शीतलत्वात् । पिङ्गला दक्षिणा नाडी । तस्यां श्वसनप्रवाहो दिवाकरसंज्ञः शिवरूपः, उष्णत्वात् । अतो रात्रौ शैत्यप्रधानसमये दक्षिणनाड्या, दिवसे उष्णप्रधानसमये वामनाड्या यदि श्वासं सर्वदा वाहयति योगी तदा कालं जयति । रात्रौ शैत्यादिना दिवा च रौद्रादिना नाऽभिभूतो भवति । एवं यदि वामनाडीवहनसमये भोजनमैथुनादि क्रूरकर्म, दक्षिणनाडीवहनसमये कर्तव्यं भवति तदा वामनासाविवरमुद्रणवामपार्श्वशयनादिना दक्षिणनाड्यां वहन् श्वसनस्य सम्पादनीयम् । एवं दक्षिणनाडीवहनसमये यात्रादिशुभं कर्म वामनाडीवहनसमये कर्तव्यं भवति । तदा दक्षिणनासाविवरमुद्रणदक्षिणपार्श्वशयनादिना वामनाड्यां वहनं सम्पादनीयम् । तेन योगिनः सिद्धिर्भवतीति संक्षेपः ॥ ३९ ॥

चित्तस्थितिजयस्य ज्ञापकं सिद्धियोगं समाध्यनुकूलमाह—

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

परमेति ॥ अस्य स्थिरचित्तस्य योगिन परममहत्त्वान्त' परममहत्त्व येषां वियत्पृथ्व्यादीनां तत्पर्यन्तो वशीकारः अप्रतिघातः

केनाप्यप्रतिबन्ध्यता। सैव क्षुत्पिपासादिपीडाप्रतिबन्धद्वारा समाधि-
साधिका चित्तजयस्य च ज्ञापिकेति भावः । अथोच सिद्धियोगे ।
प्राणस्पन्दनिरोधाद्यैरुपायैर्दृढता परा । सिद्धियोगो भवेदत्र योग-
सिद्धिकरः परः इत्यादिना ॥ ४० ॥

सम्प्रज्ञातस्य विषयं प्रदर्शयन्नसम्प्रज्ञातापरपर्य्यायं लय-
योगमाह—

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु
तत्स्थतदञ्जनतासमापत्तिः ॥ ४१ ॥

क्षीणवृत्तेरिति ॥ अभ्यासवैराग्याभ्यामपगतवृत्त्यन्तरस्य चि-
त्तस्य ग्रहीतृग्रहणग्राह्येषु, ग्रहीता पुरुषः स्थूलसूक्ष्मभेदेन, ग्रहणं
गृह्यतेऽर्थोऽनेनेतीन्द्रियम्, एवं ग्राह्यं च ग्रहीतृग्रहणग्राह्याणि । तेषु
या तत्स्थतदञ्जनता तत्स्थेन उपरागेण तदञ्जनता तन्मयता सम्यक्
तदाकारता समापत्तिः सम्यगापत्तिर्लयः सम्प्रज्ञातलक्षणो योगो भ-
वतीत्यर्थः । अत्र स्थूलसूक्ष्मवस्त्वर्थग्राह्यपदेनैवेन्द्रियलाभेऽपि तद-
र्थग्रहणपदस्योपादानं गोबलीवर्दन्यायेन । आनन्दस्य तु ह्लादापरपर्य-
स्यान्तःकरणधर्मत्वेन ग्राह्यपदार्थेऽन्तर्भूतस्येन्द्रियादेरर्थान्तरविभा-
जकधर्मस्याऽभावान्न पृथगुक्तिः । इत्थञ्च, वितर्कविचारानन्देति सूत्रे-
णोक्तस्य सवितर्कादिभेदेन चतुर्विधस्य सम्प्रज्ञातस्य, लाभः ग्राह्यपदेन
वितर्कविचारानन्दानां ग्रहीतृपदेनास्मितायाश्च लाभादिति भावः ।
उपरागेण तदाकारतायां दृष्टान्तमाह ॥ अभिजातस्येव मणेरिति ॥
निर्मलस्य स्फटिकादेर्यथा जपाकुसुमाद्युपरागेण रक्ताद्याकारता त-
थेत्यर्थः । यद्यपि ग्राह्यसमापत्तेः प्रथमभूमित्वात् सूत्रे ग्राह्यक्रमेणैव
निर्देशो युक्तस्तथापि ग्रहीतृसमाधेर्मुख्यत्वज्ञापनाय ग्रहीतृक्रमेणैव
प्रथमतो निर्देशः कृत इति दिक् ॥ ४१ ॥

समापत्तिः ॥ ४२ ॥

तत्रेति ॥ तत्र तासु मध्ये सवितर्का समापत्तिरेषा ज्ञातव्या, या शब्दार्थज्ञानानां विकल्पैः परस्पराभेदभ्रमैः संकीर्णा मिश्रिता । तथाहि । गौरित्युक्ते शब्दार्थज्ञानानि परस्परं त्रीण्यभिन्नानि लोके भासन्ते । तत्र समाहितस्य योगिनः समाधिप्रज्ञायां समारूढा गवादयर्थो यदि परस्पराभेदभ्रमरूपैर्विकल्पैरनुविद्धा एव भान्ति तदा सा विकल्पसङ्कीर्णा विकल्पविषया सवितर्कसंज्ञा भवतीत्यर्थः॥४२॥

निर्वितर्कामाह—

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

स्मृतिपरिशुद्धाविति ॥ गवादिपदानां सङ्केतो लोके विकल्पितेष्वेव गृह्यते । तस्य स्मृत्या शाब्दज्ञानं पदार्थानुमितिश्च विकल्पित एव जायते । तत्र स्मृतिपरिशुद्धौ अर्थमात्रतात्पर्यवर्ता चित्तेन अर्थमात्राभ्यासात् सङ्केतस्मृतेस्त्यागे सति सविकल्पकत्वाभावात् स्वरूपशून्येव, न वस्तुतः स्वरूपशून्याऽनोऽर्थमात्रस्य अविकल्पितार्थस्य निर्भासो भानं यत्रेत्यर्थमात्रविषया सा समापत्तिर्निर्वितर्केत्यर्थः ॥ ४३ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥

एतयैव सविचारेति ॥ एतयैव सवितर्कनिर्वितर्कया च समापत्त्या सूक्ष्मविषया, सूक्ष्मं तन्मात्राहङ्कारादिर्विषयो यस्याः सा तत्र सूक्ष्मेषु विशिष्टेषु स्ववाचकशब्दज्ञानाभ्यासभेदेनानुविद्धे विकल्पितेषु या समापत्तिः सा सविचारा । तेष्वेव विशेषणशून्येष्वर्थमात्रेषु या समापत्तिः सा निर्विचारेति भाव ॥ ४४ ॥

नन्वस्या ग्राह्यग्रहणसमापत्तेः किम्पर्यन्तं सूक्ष्मविषयत्वं तत्राह—

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

केनाप्यप्रतिबध्यता। सैव क्षुत्पिपासादिपीडाप्रतिबन्धद्वारा समाधिसाधिका चित्तजयस्य च ज्ञापिकेति भावः। अयमेव सिद्धियोगः। प्राणस्पन्दनिरोधाद्युपायैर्दृढता परा * सिद्धियोगो भवेदत्र योगः सिद्धिकरः पर इत्यादिना ॥ ४० ॥

सम्प्रज्ञातस्य विषयं प्रदर्शयन्नसम्प्रज्ञातापरपर्यायं लययोगमाह—

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु
तत्स्थतदञ्जनतासमापत्तिः ॥ ४१ ॥

क्षीणवृत्तेरिति ॥ अभ्यासवैराग्याभ्यामपगतवृत्त्यन्तरस्य चित्तस्य ग्रहीतृग्रहणग्राह्येषु, ग्रहीता पुरुषः स्थूलसूक्ष्मभेदेन, ग्रहणं गृह्यतेऽर्थोऽनेनेतीन्द्रियम्, एवं ग्राह्यं च ग्रहीतृग्रहणग्राह्याणि। तेषु या तत्स्थतदञ्जनता तत्स्थेन उपरागेण तदञ्जनता तन्मयता सम्यक् तदाकारता समापत्तिः सम्यगापत्तिर्लयः सम्प्रज्ञातलक्षणो योगो भवतीत्यर्थः। अत्र स्थूलसूक्ष्मवस्त्वर्थग्राह्यपदेनैवेन्द्रियलाभेऽपि तदर्थं ग्रहणपदस्योपादानं गोबलीवर्दन्यायेन। आनन्दस्य तु ज्ञानापरपर्यायस्यान्तःकरणधर्मत्वेन ग्राह्यपदार्थेऽन्तर्भूतस्येन्द्रियादेरवान्तरविभाजकधर्मस्याभावाच्च पृथगुक्तिः। इत्थञ्च, वितर्कविचारानन्वेति सूत्रेणोक्तस्य सवितर्कादिभेदेन चतुर्विधस्य सम्प्रज्ञातस्य, लाभः ग्राह्यपदेन वितर्कविचारानन्दानां ग्रहीतृपदेनास्मितायाश्च लाभादिति भावः। उपरागेण तदाकारतायां दृष्टान्तमाह ॥ अभिजातस्येव मणेरिति ॥ निर्मलस्य स्फटिकादेर्यथा जपाकुसुमाद्युपरागेण रक्ताद्याकारता तथेत्यर्थः। यद्यपि ग्राह्यसमापत्तेः प्रथमभूमित्वात् सूत्रे ग्राह्यक्रमेणैव निर्देशो युक्तस्तथापि ग्रहीतृसमाधेर्मुख्यत्वज्ञापनाय ग्रहीतृक्रमेणैव प्रथमतो निर्देशः कृत इति दिक् ॥ ४१ ॥

तत्र ग्राह्यग्रहणगोचरा समापत्तिः स्थूलसूक्ष्मार्थविषयकत्वात् सवितर्कसविचारभेदेन द्विविधा। पुनर्विकल्पस्य सङ्कीर्णत्वासङ्कीर्णत्वाभ्यां सवितर्कनिर्वितर्कभेदेन चतुर्धा भवति। तत्र सवितर्काया स्वरूपमाह—

तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का

समापत्तिः ॥ ४२ ॥

तत्रेति ॥ तत्र तासु मध्ये सवितर्का समापत्तिरेवा ज्ञातव्या, या शब्दार्थज्ञानानां विकल्पैः परस्पराभेदभ्रमैः संकीर्णा मिश्रिता । तथाहि । गौरित्युक्ते शब्दार्थज्ञानानि परस्परं त्रीण्यभिन्नानि लोके भासन्ते । तत्र समाहितस्य योगिनः समाधिप्रज्ञायां समारूढा गवार्थो यदि परस्पराभेदभ्रमरूपैर्विकल्पैरनुविद्धा एव भान्ति तदासा विकल्पसङ्कीर्णा विकल्पविषया सवितर्कसंज्ञा भवतीत्यर्थः॥४२॥

निर्वितर्कामाह—

स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

स्मृतिपरिशुद्धाविति ॥ गवादिपदानां सङ्केतो लोके विकल्पितेष्वेव गृह्यते । तस्य स्मृत्या शब्दज्ञानं पदार्थानुमितिश्च विकल्पित एव जायते । तत्र स्मृतिपरिशुद्धौ अर्थमात्रतात्पर्यवता चिरेण अर्थमात्राभ्यासात् सङ्केतस्मृतेस्त्यागे सति सविकल्पकत्वाभावात् स्वरूपशून्येव, न वस्तुतः स्वरूपशून्याऽतोऽर्थमात्रस्य अविकल्पिताऽर्थस्य निर्भासो भानं यत्रेत्यर्थमात्रविषया सा समापत्तिर्निर्वितर्केत्यर्थः ॥ ४३ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥

एतयैव सविचारेति ॥ एतयैव सवितर्कानिर्वितर्कया च समापत्त्या सूक्ष्मविषया, सूक्ष्मं तन्मात्राहङ्कारादिर्विषयो यस्याः सा तत्र सूक्ष्मेषु विशिष्टेषु स्ववाचकशब्दज्ञानाऽभ्यासभेदेनानुविद्धे विकल्पितेषु या समापत्तिः सा सविचारा । तेष्वेव विशेषणशून्येष्वर्थमात्रेषु या समापत्तिः सा निर्विचारेति भाव ॥ ४४ ॥

ननु तस्या ग्राह्यग्रहणसमापत्तेः किम्पर्यन्तं सूक्ष्मविषयत्वं तत्राह—

सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् ॥ ४५ ॥

सूक्ष्मेति ॥ अस्याः समापत्तेः सूक्ष्मविषयत्वम् उक्तप्रकारम् अलिङ्गपर्यवसानम् । लयं गच्छतीति लिङ्गं महत्तत्त्वादि । न लिङ्गम् अलिङ्गं प्रधानम् । तत्पर्यन्तमेव । अतः सूक्ष्मस्याभावात् पुरुषस्य सर्वेऽप्यकारणत्वे कार्याधिकसौक्ष्म्याभावादसंग्रह इति दिक् ॥४५॥

तदेवं निर्वितर्केत्यादिसूत्रेण चतुर्धा विवृतस्य सम्प्रज्ञातस्य क्षीणवृत्तेरित्यादिसूत्रेण ग्राह्यग्रहणभेदेन विशिष्टाऽविशिष्टभेदेन च अवान्तरविभागः कृतः । इदानीं सामान्यविशेषात्मना विभक्तस्य सबीजसमाधिरूपं सामान्यलक्षणनिर्बीजसमाध्यन्तरसाधकसाधनगोचरप्रयत्नावश्यकत्वज्ञापनायाह—

ता एव सबीजः समाधिः ॥ ४६ ॥

ता एवेति ॥ ता एव ग्रहीतृग्रहणग्राह्येषु सामान्यविशेषभावेनोक्ताः समापत्तय एव सबीजः दुःखादेरनारम्भसंस्काररूपैर्बीजैः सह वर्तमानः समाधिः । समाधीयते प्रत्यङ्मात्रैकाग्रीक्रियते चित्तमनेनेति भावनाविशेषः सम्प्रज्ञात इत्यर्थः ॥ ४६ ॥

आनन्दादिसमापत्तीनां निर्विचारफलतया निर्विचारायां विशेषं कञ्चिदाह—

निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

निर्विचारेति ॥ पूर्वं समाधिभिरपगतपापस्याऽन्तःकरणस्य निर्विचारवैशारद्ये निर्विचारस्य सूक्ष्मार्थगोचरनिर्विकल्पस्य समाधेर्वैशारद्ये प्रवाहरूपपाटवे सति ॥ अध्यात्मप्रसादः आत्मानं बुद्धिमधिकृत्य वर्तमानः प्रसादः ह्लादाख्यानन्दसाक्षात्कारयोग्योऽत्यन्तसत्त्वोद्रेको भवतीत्यर्थः ॥ ४७ ॥

मुख्यं फलमाह—

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

ऋतम्भरेति ॥ तत्र तस्मिन्निर्विचारवैशारद्ये सति, ऋतम्भरा ऋतं सत्यं पुरुषयाथार्थ्यं बिभर्तीति ऋतम्भरा सत्यमेव गृह्णाती प्रज्ञा भवतीत्यर्थः ॥ ४८ ॥

अत एव तस्याः फलत्वाभ्यां विषयतो विशेषमाह—

## श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥४९॥

श्रुतानुमानेति ॥ सा तु समाधिजा प्रज्ञा श्रुतानुमानप्रज्ञाभ्यां श्रुतं श्रवणं शाब्दबोधः, अनुमानं मननं यौक्तिकं ज्ञानं, तद्रूपप्रज्ञाभ्याम् अन्यविषया अतिरिक्तविषया । कुतः । विशेषार्थत्वात् । विशेषो निर्विकल्पः अज्ञातो विषयो यस्याः सा, तथात्वात् । शब्दानुमानयोः पदार्थतावच्छेदकव्यापकतावच्छेदकपुरस्कारेणैव धीजनकत्वनियमेन तद्ग्रहणायोग्यविशेष्यमात्रविषयकत्वादिति यावत् ॥

वेदान्तिनस्तु शब्दस्य शक्त्या पदार्थतावच्छेदकपुरस्कारेणैव धीजनकत्वनियमो, न तु लक्षणयाऽपि । अतो लक्षणया केवलस्य ब्रह्मण शब्दगम्यत्वेऽपि न क्षतिः । तथाच महावाक्यार्थप्रयोजकीभूतानुभवजनकावान्तरवाक्यपदजन्यस्मृतिकारणीभूतानुभवजनकत्वमसम्प्रज्ञानयोगस्य स्वजन्यधर्मद्वारेति न कोऽपि विरोधो, न वा महावाक्यार्थबोधानुपपत्तिरपीति भाव इति प्राहुः ॥

इदन्तु बोध्यम् । यद्यपि, तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतेरुपनिषन्मात्रगम्यमवगमतत्त्वम् । दशमस्त्वमसीत्यादिवाक्यशाद्दशमादिसाक्षात्कारदर्शनात् । तत्त्वमस्यादिवाक्यैरप्यपरोक्षप्रमा च सम्भवति । योग्यपदार्थनिरूपितत्वम्पदार्थाभेदपरशब्दत्वादिना शब्दस्यापरोक्षधीजनकत्वेऽतिप्रसङ्गाभावाद्यागादिवाक्यानां त्वम्पदार्थाभेदपरत्वाभावात् । धार्मिकस्त्वमसीत्यादिवाक्यानान्तु योग्यपदार्थनिरूपितत्वम्पदार्थाभेदपरत्वाभावात् । तस्मात्तानि विषयाजन्यधीजनकत्वेन परोक्षज्ञानजनकानि । तत्त्वमस्यादिवाक्यन्तु निरुक्तरूपेणापरोक्षधीजनकमेव । ततो जातायामप्यपरोक्षप्रमायां विपरीतभावनारूपदोषसत्त्वे फलं न सम्भवतीति प्रतिबन्धनिरासाय निदिध्यासनादिकमप्यावश्यकमिति प्रतिबन्धनिवृत्तिफलकत्वमेव, वक्तुमुचितं न ज्ञानफलकत्वं, भावनायाः प्रमाणान्तरत्वापातात् । कामिनीं भावयतो व्यवहितकामिनीसाक्षात्कारस्येव भावनाजन्यत्वेनात्मसाक्षात्कारस्यप्रमात्वप्रसङ्गाच्च । मूलीभूतानुभवस्तु सुषुप्तिमोपादाय सम्भवत्येवेति न सर्वथा ज्ञाने भावनाविशेषरूपनिदिध्यासनापेक्षा, तथापि दशमवाक्यसहकृतेन मनसा चक्षुषा वा अपरोक्षप्रमाजननेन दृष्टान्तासिद्धे निरुक्तरूपेण शब्दस्यापरोक्षज्ञानजनकत्वे मानाभावात् । इन्द्रियजन्यज्ञान-

स्यात्परोक्षत्वप्रतिपत्तेः । मनसैवानुद्रष्टव्यमिति श्रुतेश्च । श्रुत्या प्राक् श्रवणवत्तत्पदार्थशोधनादिना प्रमितयोर्जीवपरमात्मनोरचिन्ताभावादिरूपामद्वयञ्च मनसैव भावनासहकारेणापरोक्षप्रमा भवतीति भावनासमाधेर्ज्ञानफलकत्वकथनमेवैतन्मतानुसारेण युक्तमवेति दिक् ॥

न च भावनाजन्यत्वेऽस्यापरोक्षसाक्षात्कारस्याप्रामाण्यम् । अबाधितविषयत्वादुक्तसाक्षात्कारस्य तु बाधितार्थविषयत्वादप्रामाण्यं न भावनाजन्यत्वेनेति भावः ॥ ४९ ॥

नन्वनादिना विषयभोगसंस्कारेणातिबलीयसाभिहता समाधिप्रज्ञा स्थितिं न लभतेऽयत आह—

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

तज्ज इति ॥ समाधिप्रज्ञाजन्यः संस्कारो व्युत्थानसंस्कारस्य प्रतिबन्धी बाधक इत्यर्थः । कथमेतदिति चेत् प्रज्ञासंस्कारस्य तत्त्वस्पर्शित्वादिति ध्येयम् ॥ ५० ॥

ननु सम्प्रज्ञातसमाधिप्रज्ञासंस्कारप्रबलं चित्तं तत्प्रज्ञापरम्परामेव कुर्यात् । तथा च कथं निर्बीजसमाधिं कुर्यात् । तत्राह—

तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

तस्यापीति ॥ पुरुषख्यात्यनन्तरं वैराग्यसंस्कारप्रचयेन तस्य सम्प्रज्ञातसमाधिप्रज्ञासंस्कारस्य अपिशब्दात् प्रज्ञायाश्च निरोधे सति सर्ववृत्तिनिरोधात् सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयाद् निर्बीजं मिथ्याज्ञानवासनारूपसंस्कारबीजरहितोऽसम्प्रज्ञातसमाधिर्भवति । यस्मिन् सति पुरुषः स्वरूपमात्रनिष्ठः केवलो भवति ॥ ५१ ॥

इति श्रीनारायणतीर्थकृतायां योगसिद्धान्तचन्द्रिकायां
प्रथमः समाधिपादः ॥ १ ॥

---

## अथ साधनपादः ॥ २ ॥

निरूपितः समाधिरतः परं साधनानि निरूप्यन्ते द्वितीये । तत्रादौ निरोधसाधनीभूतयोरभ्यासवैराग्ययोः साधनीभूतायां चित्तशुद्धौ हेतुं चित्तमाकर्षयतां बाह्येन्द्रियाणां निग्रहे वा साधारणहेतुं क्रियायोगमाह—

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

तप उपवासादिना कायशोषणम् । उक्तमीश्वरगीतायाम् । उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः * शरीरशोषणं प्राहुस्तापसास्तप उत्तममिति । स्वाध्याय उपनिषदाद्यावृत्तिः । उक्तं च तत्रैव । वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः * सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते इति । प्रणिधानं स्तुत्यादिजनिता भक्तिः । उक्ता तथा तत्रैव । स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः * सुनिश्चला भवेद्भक्तिरेतदीश्वरपूजनमिति । स्तुतिरत्र गुणमात्रकथनं पूजासनपाद्याद्यर्पणम् । एताभिर्जनिता भक्तिरीश्वरपूजनम् । तच्च सर्वक्रियाणां परमेश्वरे परमगुरावर्पणम् । तत्फलसंन्यासो वा । तत्राद्यं, कामतोऽकामतो वाऽपि यत् करोमि शुभाशुभम् * तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहमित्यादिस्मृतिभिर्व्याख्यातम् । द्वितीयं तु कर्मफलानां भोक्ता परमेश्वर इति चिन्तनम् । भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् * सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छतीत्यादिना बोधितम् । एतानि निरुक्तार्थभावनाविशिष्टभक्तियोगभिन्नत्वात् क्रियायोगः । वागादिव्यापारमात्रत्वात् । क्रियायोग इत्येकवचननिर्देशात् कायवाङ्मनोव्यापारः समुचित एव क्रियायोगो विशिष्टफल इति ज्ञापितम् । यद्यपि योगाङ्गेषु नियमे शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि पञ्चाङ्गानि तथापि प्रकृतत्रयाणां दृष्टादृष्टद्वाराऽऽशु कायेन्द्रियमनोजयादिविशिष्टफलश्रवणाद् दर्शनाच्च ततःपृथगुक्तिरिति मन्तव्यम् ॥ १ ॥

क्रियायोगफलमाह—

**समाधिभावनार्थः क्लेशकर्मतनूकरणार्थश्च ॥ २ ॥**

समाधेर्भावनमुत्पादनमर्थः फलं यस्य स तथोक्तः । महत्सु क्लेशादिषु सत्सु समाधिर्न सिद्ध्यति । तत्र क्रियायोग क्लेशांस्तनूकृत्य समाधिं भावयति । तनूकरणमिह सूक्ष्मीकरणम् । सूक्ष्मं यत्र क्लेशा सन्तीति कोशात् । विप्रलयेन च स्वोचितफलाधायकतामतनूनां तनूयत्करण स्वोचितफलेऽयमिभव मात्र, न स्वरूपतो हानि. । वर्णाश्रमाद्यभिमानादिमूलकेन क्रियायोगेनाविवेकोच्छदासम्भवादिति ज्ञापितम् । तथाच क्रियायोगेन संजातः समाधिर्विवेकज्ञानमुत्पाद्य सवासनमिथ्याज्ञान नाशयतीति निष्कर्ष. ॥ २ ॥

अथ के क्लेशा, कियन्तो चेत्यत आह—

## अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥

क्लेशा अविद्यादय. । ते च विभागबलात् पञ्चेत्यर्थः ॥ ३ ॥

उत्तरेषां चतुर्णां नाशेऽपि ज्ञानमेवाऽसाधारण कारणमिति ज्ञापनायाविद्याकार्यत्वेनाविद्यात्मकत्वमाह—

## अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्॥४॥

उत्तरेषामस्मितादीनाम् अविद्या वक्ष्यमाणलक्षणा क्षेत्र प्रसवभूमि । तेषामवतारभेदमाह ॥ प्रसुप्तेति ॥ प्रसुप्तास्तनवो विच्छिन्ना उदाराश्च तेषाम् । तत्र विदेहप्रकृतिलयानां प्रसुप्ता । तत्त्वज्ञानाभावेन शक्तिरूपणावस्थानात् । ते हि पुनरुद्भवन्ति । क्रियायोगिनां तनवः क्रियायोगकाल एव तेषामभिभवात् । विषयसंयोगिना विच्छिन्ना उदाराश्च भवन्ति । यथा कस्यचित्तत्र रागस्तत्र क्रोधो विच्छिन्नोऽपि राग उदार एव । ततोऽन्यत्र तु क्रोध उदारो रागो विच्छिन्न एवेति द्रष्टव्यम् । उक्त च— प्रसुप्तास्तत्त्वलीनानां तन्ववस्थास्तु योगिनाम् * विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनामिति ॥ ४ ॥

तत्राऽविद्यालक्षणमाह—

## अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥

अतस्मिंस्तद्बुद्धिरित्यविद्याया. सामान्यलक्षणम् । तस्या एव

भेदप्रतिपादनम्— अनित्येति ॥ अत्र भाष्यम् । अनित्ये कार्ये नित्यख्यातिः । तद्यथा, ध्रुवा इयं पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति । तथा अशुचौ परमबीभत्से काये शुचिख्यातिः । उक्तं च— स्थानाद् बीजादुपष्टम्भान्निःस्यन्दान्निधनाद् अपि * कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुरिति । अशुचौ शुचिख्यातिर्दृश्यते— नवेव शशाङ्कलेखा कमनीयेयं कन्या, मध्वमृतावयवनिर्मितेव, चन्द्रं भित्त्वा निःसृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावभावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति । कस्य केन सम्बन्धः । भवति चैवमशुचौ शुचिविपर्यासप्रत्ययः । एतेनापुण्ये पुण्यप्रत्ययः । तथैवानर्थे चार्थप्रत्ययो व्याख्यातः । तथा दुःखे सुखख्यातिं वक्ष्यति, परिणामतापेति सूत्रे । तथाऽनात्मन्यात्मख्यातिः । बाह्योपकरणेषु चेतनाचेतनेषु भोगाधिष्ठाने शरीरे पुरुषोपकरणे वा मनसि अनात्मन्यात्मख्यातिरिति तथैव तत्रोक्तम् । व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेन मन्यमानस्तस्य सम्पदम् अनुनन्दत्यात्मसम्पदं मन्यमानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्यमानः सर्वो ह्यप्रतिबुद्ध इत्येषा चतुष्पादविद्या मूलमस्य क्लेशसंतानस्य कर्माशयस्य च विपाकस्य चेति । तस्याश्चामित्रागोष्पदवद्वस्तुसतत्त्वं विज्ञेयम् । यथा, नामित्रो मित्राभावो, न मित्रमात्रं, किन्तु तद्विरुद्धः सपत्नः । यथा वाऽगोष्पदं न गोष्पदाभावो, न गोष्पदमात्रं, किन्तु देश एव ताभ्यामन्यद्वस्त्वन्तरम् । एवमविद्यापि न प्रमाणं, न वा प्रमाणाभावः, किन्तु विपरीतं ज्ञानान्तरमविद्येति ॥ भाष्यार्थस्तु अनित्ये कार्ये कालनिष्ठाभावप्रतियोगिनि विकारेऽहङ्कारादौ नित्यख्यातिः तादृशाभावाप्रतियोगित्वधीः । उदाहरन्ति । ध्रुवेति । परमबीभत्से कुत्सितेऽपवित्रे । कायस्याशुचित्वे स्मृतिं प्रमाणयन्ति । उक्तञ्चेति । स्थानं मलमूत्राद्युपहतं मातुरुदरम् बीज शुक्रशोणिते उपष्टम्भो मातृभुक्तान्नादिरसः । निःस्यन्दो नवद्वारेण रोमकूपादिभिः क्षरणम् । निधनं मरणम् । रात्रावन्येऽशुद्धिहेतवः स्पष्टाः । तथा स्नानादिभिः शौचाधानादपि सदा स्वतोऽशुचित्वमनुमीयत इत्याह । आधेयशौचत्वादिति । ननु शरीरमशुचि, तथापि तत्र शुचिख्यातौ किं प्रमाणमित्याकाङ्क्षायामाह । अशुचौ शुचिख्यातिर्दृश्यते इति । नवीनशशाङ्कवदिव कन्या कमनीया । मधुन अमृतस्यावयवैरेवनिर्मितेव

ज्ञायते निश्चीयते । भावो मानसो विकारः । तज्ज्ञापिका चेष्टा हावः । कस्य स्त्रीकायस्य निकृष्टस्य केन चन्द्रकलादिनाऽतिनिर्मलेनाभिसम्बन्धः साधर्म्यं, नास्त्येव । उपसंहरति । भवतीति । एतेन अशुचौ शुचिख्यातिव्याख्यानेन, अपुण्ये = जैनसम्मततप्तशिलारोहणाऽऽदौ, कर्ममीमांसासंमतवक्ष्यमाण—कृष्णशुक्लेति—चतुर्थचरणसूत्रे यज्ञीयहिंसादौ वामागमसंमततीर्थपानादौ वा पुण्यप्रत्ययः । तथाऽनर्थे अर्जनरक्षणादिना दुःखबहुलतया अपुरुषार्थे धनादौ अर्थप्रत्ययः । पुरुषार्थप्रत्ययोऽप्यविद्यात्वेन व्याख्यातः । शुच्यशुचिशब्दयोर्भोगोत्कृष्टसाधनासाधनमात्रोपलक्षकत्वादित्यर्थः । भाष्योक्तमप्यविद्याद्वयमन्यासामपि संसारहेतूनामविद्यानामुपलक्षकमतो न न्यूनता तत्रेत्युत्तरग्रन्थे तृतीयामविद्यां व्याख्यातुमादौ वक्ष्यमाणसूत्रमुखेन तस्या उदाहरणं प्रदर्शयति । तथा दुःख इति । तथेत्यस्यैत्यत्र सुखख्यातिरित्यनेनान्वयः । वक्ष्यतीति । अर्थादिति शेषः । तत्रेति । जगद्रूपे दुःखे इत्यर्थः । चतुर्थीमविद्यां व्याचष्टे । तथाऽनात्मनीति । तस्या उदाहरणं, बाह्येति । बाह्यस्य देहस्योपकरणेषु पुत्रादिष्वहं बुद्धिः । तथा विषयभोगावच्छेदकतयान्तःकरणस्योपकरणे शरीरेऽहंबुद्धिः । तथाभोग्यतया साक्षात् पुरुषस्योपकरणे अन्त.करणेऽहंबुद्धिरित्यर्थः । इमामेव चतुर्थीमविद्यामादाय प्रपञ्चोऽविद्याकार्यं इत्युच्यते । अहं कर्तेत्याद्यभिमानस्यैव धर्माधर्मोत्पत्तिद्वाराऽखिलजगद्धेतुत्वादिति । अत्र पञ्चशिखाचार्यसंवादमाह । तथैतदिति । यथा मयोक्तं तथा अत्र चतुर्थ्यविद्याविषये पञ्चशिखेनाप्येतदुक्तमित्यर्थः । व्यक्ताऽव्यक्तं व्याकृताव्याकृतं स्थूलसूक्ष्मरूपं बुद्धिसत्त्वमात्मतया गृहीत्वा तस्य सत्त्वस्य सम्पत्तिं सत्यसंकल्पादिकं शुभवासनादृढ्यादिकं वाऽऽत्मसम्पदं मन्वानः, तथा तस्य विपत्तिमिच्छाविघातादिरूपं चानुशोचत्यात्मविपत्तिं मन्वानः । एवंविधो यः स सर्वोऽप्यविद्यस्येतदुक्तमित्यन्वयः । ननु शुक्तिरजतादिभ्रमरूपाणामविद्यानां कथमत्र गणना न कृतेत्याशङ्कायामाह । एषेति । पशोरिव चत्वारि पदानि पादा अंशावस्था इति चतुष्पात् । एवम्भूतैषा समारस्य मूलं भवतीत्यर्थः । तथाच संसाराहेतुतया नान्यासामत्र गणनमित्याशयः । ननु विग्रहवतोऽविद्याशब्दस्य विद्याभिन्नत्वं विद्याशून्यत्वम्, अत्युक्तमविद्यात्वं(१)

(१) नास्ति विद्या यस्या इति पञ्चमीबहुव्रीहिणेत्यर्थः ।

धार्थः स्यात्र तु विपरीतयथार्थतिरित्याशङ्क्याह । तस्याश्चेति । तस्या-श्चाविद्यायाः, वस्तुसतत्त्वं वस्तुस्वरूपता प्रत्ययान्तरत्वमिति यावत् । न त्वभावोऽमित्रागोष्पदशब्दार्थवदित्यर्थः । दृष्टान्तं विभजते । यथे-ति । न मित्राभाव इति । अत्राभावशब्देन संसर्गान्योन्याभावौ प्राप्तौ । न मित्रमात्रमिति । नास्ति मित्रं यस्मादिति व्युत्पत्त्या केवलमित्यर्थः । किन्तु तद्विरुद्धो मित्रविरुद्ध इत्यर्थः । तथाच निरूढलक्षणेति भावः । किन्तु देश एवेति । विपुलो देशविशेषोऽगोष्पद इति परि-भाषितः । प्रमाणं विद्या ज्ञानान्तरमिति । एतेनाविद्याशब्दस्य ज्ञानवि-शेषे रूढत्वावधारणादस्मिन् दर्शने वेदान्तिनामिव न प्रकृत्यवान्तर-भेदो, न वा सांख्यानामिवाविवेकोऽविद्याशब्दार्थः, किन्तु यथार्थानु-भवनाश्यं सामान्यतोऽहमित्यध्याकारं विपरीतं विशिष्टज्ञानमेवेति समर्थनम् । अयं भाव । प्रवाहरूपेणानादिभ्रमैरेवावरणादिकार्य-सम्भवाद् अनादिभावरूपत्वेन नित्यत्वात् प्रकृतेरिदानीमेतस्याविद्या उत्पन्ना नष्टेत्यादिधीविषयत्वायोगाच्च, न मलिनसत्त्वप्रधाना प्रकृ-तिरविद्या, नाप्यविवेकः । तस्य ज्ञानाभावरूपस्य कार्यं प्रति हेतुत्वायो-गात् । धर्मिप्रतियोगिज्ञानाज्ञानाभ्यां व्याघातापत्त्या न जानामीति धीविषयत्वायोगाच्च । तस्मादिदानीमुदासीना बुद्ध्यादौ सामान्यतो-ऽहंधीरेवाविद्या । अतोऽस्यन्नमेवतावगाहिन ईश्वरोऽहमहं भोगीत्ये-वं बुद्धिगुणदोषावगाहिन्यस्मितात्मप्रत्ययाद्भेद इति दिक् ॥

वेदान्तिनस्तु— पापादरपि विनिगमकाभावेनावरकत्वादिप्र-सक्तिगौरवाद् भ्रमादेः कार्यत्वेन सोपादानत्वावश्यकत्वाच्च तदे-वोपादानं, न जानामीत्यपरोक्षानुभवसिद्धमाधिष्ठानज्ञाननाश्यमनिर्व-चनीयमविद्यापदवाच्यं कल्प्यते । युक्तश्चायं पक्ष । माया चाविद्या च स्वयमेव भवति, नित्यनिवृत्तापि मूढैरात्मेव दृष्टा, भूयश्चान्ते विश्व-मायानिवृत्तिरित्यादिश्रुत्या नाऽसद्रूपा न सद्रूपा, मायानैवोभयात्मि-का * सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनीति स्मृत्या, चै-तन्याभाससंयुक्तं शरीरद्वयकारणम् * आत्माऽज्ञानं तदव्यक्तमव्या-कृतमितीर्यते ॥ न सन्नासन्न सदसन्नभिन्नाऽभिन्न नचात्मनः * न स-भागं न निर्भागं न चाप्युभयरूपकम् ॥ ब्रह्मात्मैकत्वविज्ञानहेयमिथ्या-त्वकारणादिति वार्त्तिकाक्त्या च प्रकृत्यवान्तरभेदस्यैवाविद्यापद-वाच्यत्वप्रतिपादनादिति प्राहु ॥ तन्न सम्यक् ॥ जगत्कारणप्रकृतत्व

विद्याविद्ययोर्विद्यात्वाविद्यात्वाङ्गीकारेऽखिलप्रपञ्चस्यैवाऽविद्यात्वप्रसक्तावे-
कस्य ज्ञानेनाविद्यानाशादन्यैरपि प्रपञ्चाननुभवप्रसङ्गात्। अध्यासे
तु विद्यैवैकत्वम् । अविद्यानियतसंकरत्वाभावात्। विनोपादाननिवृ-
त्ति भ्रमस्यात्यन्तिकोच्छेदासम्भवाच्च। नचैकाज्ञानपक्षेऽज्ञाननिवृत्ते-
र्विश्वस्याप्यनानाज्ञानपक्षे च जीवभेदेन प्रपञ्चभेदाङ्गीकारान्महापट-
नाशे खण्डपटनाशवदेकाज्ञाननाशे खण्डप्रपञ्चाङ्गीकाराज्ज्ञानप्रपञ्चाननु-
भवप्रसङ्ग इति वाच्यम्। एकाज्ञानपक्षस्य, तद्यो यो देवानां प्रत्यबु-
ध्यत स एव तदभवदित्यादिश्रुतिबाधितत्वात्। नानाज्ञानपक्षीयसि-
द्धान्तस्य च कल्पनामात्रत्वात्। स्वप्नादिदृष्टान्तस्य च तर्हीदं
तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यामेव व्याक्रियत इत्यादिश्रुत्या, वै-
धर्म्याच्च न स्वप्नादिवदिति भगवद्बादरायणसूत्रेण च निरासात्
तद्दृष्टान्तैरपि नार्थसिद्धिः। तस्माद् भ्रमपरम्परैवाऽविद्या, सा चा-
न्तःकरणस्यैव धर्मः। शुक्तिरजतस्वप्नमनोरथादयोऽपि मनःपरि-
णामा एव बाधाबाधाभ्यां सदसद्रूपाः। तथाहि। ते नात्यन्तसन्तः।
प्रतिपन्नधर्मिणि निषेधधीरूपबाधदर्शनात्। नाप्यत्यन्तासन्तः।
प्रतीयमानत्वात्। अत्यन्तासतो नृशृङ्गादेरभावात्। अतः सदसदात्म-
काः। न च विरोधः। प्रकारभेदेनाविरोधात्। यथा हि लौहित्यं बि-
म्बरूपेण सत् स्फटिकगतप्रतिबिम्बरूपेण चाऽसदिति दृष्टम्। एवं
रजताद्यापणस्थत्वादिरूपेण सत् शुक्त्याद्यध्यस्तत्वादिरूपेण चासत्।
दृश्यमेव सर्वं जगत्स्वरूपेण सत्, चेतनेऽध्यस्तरूपेण चासदित्यतः
सर्वजगज्ज्ञानं सदसत्ख्यातिरेव। तथैतदाह भगवान् कपिलः। सद-
सत्ख्यातिर्बाधाबाधाभ्यामिति। तस्मादनिर्वचनीयख्यातिरित्यभि-
मानः। एवं भ्रमपरम्परैवाविद्येत्यभिमानोऽन्यथाख्यातिवादिनां न्याय-
वैशेषिकयोरख्यातिवादिनां कर्ममीमांसकानामात्मख्यातिवादिनां यो-
गाचारप्रभृतीनां त्रयाणां बौद्धानां च असत्ख्यातिवादिनां माध्यमि-
कप्रभृतीनामपि। एतच्च सम्यक्। अज्ञानान्वयव्यतिरेकविरोधात्।
दूरादिवशाद्धि रज्जुत्वादिना रज्ज्वाद्यनवगमे भुजगाद्यध्यासो, न
तु रज्जुत्वादिनाऽवगमे तथावगमे त्वध्यासनिवृत्तिरेवेत्यन्वयव्य-
तिरेकयोः सर्वानुभवसिद्धत्वात्। ननु नाधिष्ठानाज्ञानं कारणं, किन्तु
रागादिदोषेणाधिष्ठानप्रतिपत्तिप्रतिबन्धादध्यासः। रागादिश्च पूर्व-
पूर्वाध्यासात्। तथा च पूर्वपूर्वाध्यासाद् रागादि, रागादितश्चाध्यासो-

तराभ्यास इति बीजाङ्कुरवदनादित्वाच्चानवस्थानदोष, प्रथमहष्टहेतुकत्वऽपीति चेन्न । अनन्तरागाणामदृष्टानां च दोषत्वकल्पने गौरवात् तद्धेतुतयैकदोषकल्पने लाघवात् । स च दोष , एकमेवाऽद्वितीय ब्रह्मेति, अथात आदेशो नेति नेतीत्यादिश्रुतिभिरनिर्वाच्योऽज्ञानेनावृत ज्ञानमित्यादिस्मृतिभिश्चाज्ञानादिपदवाच्य स्वरूपत एवैक । दिनद्वयादावपि तदृ ममाज्ञानमित्यपरोक्षानुभवात् । तस्मादनाद्यज्ञानमेवाविद्या सर्वभ्रमहेतुर्न विभ्रमपरम्परैवेति वेदान्तिनामभिप्रायादिति चेत्, अत्र वदन्ति कार्यसामान्य प्रति फलसकारणताकानामदृष्टानामभ्यासे दोषमात्रकल्पने लाघवम् । धर्मिकल्पनातो धर्मकल्पनालाघवस्य सर्वसम्मतत्वात् । तस्माद्दृष्टादिजन्या भ्रमपरम्परैवाऽविद्या । दिग्द्वयप्रत्यभिज्ञा तु स्वाजात्यावलम्बिनी नातस्तद्विरोधो न वा श्रुतिविरोध । चैतन्येऽध्यस्तरूपेण सर्वासत्त्वस्य तदर्थत्वादितिसक्षेप ॥५॥

अविद्याकार्यभूतामस्मितामाह—

## दृग्दर्शनशक्त्योरेकात्मकत्वेवास्मिता ॥ ६ ॥

दृक् पुरुष , दृश्यते इति दर्शन प्रधानम् । शक्तिशब्दो योग्यतार्थक । भोक्तृभोग्यत्वयोग्ययोरत्यन्तविविक्तयोर्दृग्दृश्ययोरविद्याकृतैकता आत्यन्तिक तादात्म्य, साऽस्मितेत्यर्थ । इवशब्दस्त्वहमस्मीतिप्रतीतिकृतत्व तादात्म्यस्य ज्ञापयति ॥ ६ ॥

अस्मितायाः कार्य राग लक्षयति—

## सुखानुशयी रागः ॥ ७ ॥

सुखमनुशेते विषयीकरोतीति सुखज्ञस्य सुखानुस्मृतिपूर्वक सुखतत्साधनेषु तृष्णारूपो गर्द्धो रागसंज्ञक क्लेश इत्यर्थ ॥ ७ ॥

रागप्रतिघातोत्थतया रागस्य पश्चाद् द्वेष लक्षयति—

## दुःखानुशयी द्वेषः ॥ ८ ॥

दु खमनुशेत इति दु खाभिज्ञस्य दु खतत्साधनेषु क्रोधो द्वेषसंज्ञक क्लेश इत्यर्थ ॥ ८ ॥

. द्वेषमूलकतया द्वेषस्य पश्चादभिनिवेशं लक्षयति—

## स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ॥ ९ ॥

स्वस्य रसेन संस्कारमात्रेण वहतीति स्वरसवाही । अपिशब्दसमुच्चितमविद्वांसं तं तथेति तच्छब्दः परामृशति । रूढः प्रसिद्धः तथा च यथा अविद्वज्जनस्य तथा विदुषोऽपि स्वरसवाहित्वाद्यः क्लेशोऽस्ति माऽहमभावी भूव सदा जीव्यासमिति मरणभयरूपः पूर्वजन्मीयमरणदुःखानुभवहेतुकः सोऽभिनिवेशसंज्ञकः क्लेश इत्यर्थः । अविद्यादयस्तु विदुषि न सन्तीति न तेष्वतिव्याप्तिः । क्लेशत्वकथनेन तथाशिषां हेयभाविदुःखानुत्पादविषयत्वं, नात्मसुखविषयत्वमिति ज्ञापितम् । अन्यथा सुखत्वेनेवाल्पत्वेनापि प्रेयस्त्वकल्पनप्रसङ्गात् । प्रेयस्त्वकल्पनबद्धात्मत्वेनापि तत्कल्पनौचित्यापातात् । तथा चैतन्मतेऽपसिद्धान्तापत्तिः स्पष्टा । इयं च बलवत्तरा वासना यावच्चित्तमनुवर्त्तते, न नश्यति ज्ञानेन । अतस्तत्त्वज्ञस्याविद्यास्मितादिसंस्कारनाशेऽप्यनुवर्त्तत इति दिक् ॥

एतेषामेवाविद्यादिक्लेशानां पञ्चानां यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञाः । एतेषामवान्तरभेदः सांख्ये उक्तः—

भेदस्तमसोऽष्टविधो मोहस्य च तथा दशविधो महामोहः ।
तमिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः—

इत्यादिना । अयमर्थः । अष्टसु प्रकृतिमहदहङ्कारपञ्चतन्मात्रेष्वात्मबुद्धिरविद्या तमः । तस्याष्टानात्मगोचरत्वादष्टविधत्वं सर्वस्याप्यैश्वर्यस्याणिमाद्यष्टैश्वर्यान्तर्गतत्वात् तत्प्राप्तिनिमित्तः सिद्धोऽहमस्मीत्याद्यभिमानविशेषोऽस्मिता मोहः । तस्याष्टविधैश्वर्यगोचरत्वादष्टविधत्वम् । शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषूत्कटतृष्णा रागो महामोहः । स च विषयस्य दशविधत्वाद्दशविधः । परेण भुज्यमानेषु शब्दादिषु परप्राप्तेष्वणिमादिषु द्वेषस्तामिस्रोऽष्टादशगोचरत्वादष्टादशविधः । प्राप्तेष्वष्टादशसु विषयेषु तपस्विभ्योऽसुरादिभ्यश्च ग्रहणभयमभिनिवेशोऽन्धतामिस्रः । स चाऽष्टादशविषयत्वादष्टादशविध इति । सोऽयं पञ्चविधः क्लेशोऽवान्तरभेदाद् द्विषष्टिभेदवानिति संक्षेपः ॥ ९ ॥

तदेवं क्लेशानां चित्तविक्षेपकत्वाद्योगाभ्यासयोगकामेन प्रथमं पञ्चप्रकारा अपि क्लेशाः परिहरणीयाः। ते चाज्ञाताः परिहर्तुमशक्या इति तेषामुद्देशं कारणं लक्षणं चाभिधाय स्थूलसूक्ष्मभेदेन पुनर्द्विविधानां तेषां च विभागेन हानोपायं च प्रवदन् प्रथमं सूक्ष्माणां हानोपायमाह—

## ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

ते विवेकज्ञानदग्धाः सूक्ष्माः क्लेशाः प्रतिप्रसवहेयाः प्रसवविरुद्धः प्रतिप्रसवः, चित्तस्य कृतकृत्यस्यास्मितायां स्वप्रकृतौ लयस्तेन हेयाः नाश्याः । धर्मिनाशादेव तद्धर्माणां संस्काराणामात्यन्तिकनाश इति भावः । ननु क्लेशसंस्कारा एव संसारहेतवः । तेषां नाश एव मोक्षायापेक्ष्यते न चित्तनाशः। अतोऽत्र चित्तनाशान्तानुसरणमनुचितमितिचेन्न । योगिसंकल्पेन भ्रष्टबीजादित इव दग्धबीजशक्तिकादपि कदाचित् पुनरङ्कुरोत्पत्तिप्रसङ्गादिति संक्षेपः॥१०॥

स्थूलानां हानोपायमाह—

## ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

तद्वृत्तयः तेषां क्लेशानां वृत्तय स्थूलाः अभिव्यक्तावस्थाः प्रथमं क्रियायोगेनाल्पीकृता , ध्यानहेयाश्चित्तैकाग्रतालक्षणेन ध्यानेन प्रज्ञासामग्र्या नाश्या इत्यर्थः।यद्यपि प्रथममिदमेव सूत्रमुपन्यस्तुमुचितं स्थूलनाशस्य प्रथमभूमित्वात् तथापि चित्तलयस्य मुख्यफलत्वज्ञापनाय, ते प्रतिप्रसवेति सूत्रमेवादावुपन्यस्तमिति दिक् ॥ ११ ॥

ननु जात्यायुर्भोगहेतवः पुरुष क्लिश्नन्तः क्लेशाः कर्माशयश्च तथा, न स्वविद्याद्यस्तत्कथमेतेषां क्लेशत्वमित्याशङ्क्य कर्मतत्फलमूलत्वेन बन्धकत्वात्तेषां क्लेशत्वमाह—

## क्लेशमूलः कर्माशयो दृष्टजन्मवेदनीयः ॥ १२ ॥

क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशा मूलं यस्योत्पादे कार्य्यकारणभावे च स तथोक्तः कर्माशयः । आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयो धर्माधर्मरूपः संस्कारः । स द्विविधः । दृष्टादृष्टजन्मवेदनीयः। दृष्टादृष्टजन्मनी वर्त्तमानभविष्यती ताभ्यां वेदनीयो भोग्यः,तीव्रसंवेगेन परदेवताराधनादिद्वारा, महद्रवमाना-

दिना चेह जन्मन्येवानुभवनीयो दृष्टजन्मवेदनीयः । मृदुमध्यवेगेन कृतकर्मणा जन्मान्तरेऽनुभवनीयोऽदृष्टजन्मवेदनीय इति यावत् । तत्र प्रथमः क्रमेण नन्दीश्वरस्याष्टवार्षिकस्य शिवभजनेन देवत्वादिप्राप्तिः । नहुषस्य महानुभावमहर्षीणामवमानेन सर्पत्वादिप्राप्ते । एवं द्वितीयोऽन्येषां मन्दानाम् । मनुष्यदेहेन संवत्सरसहस्रादिदिव्यैश्वर्य-भोगस्यासम्भवात् । क्लेशमूल इत्यनेन-क्षीणक्लेशानां नास्त्यदृष्टजन्म-भोग्य । ज्ञानेन क्लेशानां कर्म्मबीजमूलानां नाशात् । नारकिणां तु नास्ति दृष्टजन्मवेदनीय इति ज्ञापितम् ॥ १२ ॥

ननु ज्ञानिनां क्लेशादर्धिनाशान्मास्तु धर्माधर्मोत्पत्तिः । प्राक्तनानां तु जन्मसम्पादिता, नियतविपाकैस्तु भाविजन्मना भोग. स्यादेव । तेषां दृष्टभोगेन क्षपयितुमशक्यत्वात् । अतः कथं कर्मिभ्यो विशेषस्तत्राह—

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

अविद्यादिरूपे मूले सत्येव तद्विपाकः, तस्य कर्म्माशयस्य संचितस्य क्रियमाणस्य वा विपाक, विपच्यते साध्यते कर्म्मभिरिति विपाकः फलं भवति । स च विपाकस्त्रिविधः । जातिर्जन्म देवत्वादिर्षा । आयु चिरकालं देहप्राणयोर्योग. । भोगः विषयेन्द्रियसंयोगजन्यः सुखदु.खानुभव इति । अयं भावः । कर्म्माशयोपभोगार्थं जात्यायुषी भोगश्च सुखदु.खयोरनुभवः । स च रागद्वेषानुविद्धः । सन्तोषद्वेषवतोरेव तद्दर्शनात् । न च विदुषो रागद्वेषौ स्त' । तद्धेतुभूताया अविद्यायास्तत्त्वज्ञानेन नाशात् । तस्मात् क्लेशानामपि फलोपजनने कर्म्माशयसहकारित्वात् । क्लेशादिसलिलावसिक्तायामेवात्मभूमौ विपाकाङ्कुरो, न क्षीणक्लेशोपरातमभूमौ । न हि कारणमान्नात् फलं, किन्तु सामग्रीतः । ननु क्लेशानां कर्मसहकारित्वे प्रमाणं नास्ति ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुनेत्यादिवाक्येभ्य', तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावित्यादिसूत्रेभ्यः, क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे इत्यादिश्रुतिभ्यश्च ज्ञानस्य क्लेशक्षयहेतुत्ववत् कर्मक्षयहेतुत्वावगमात् । अत क्लेशाभावकाले धर्माभावस्यावश्यकत्वात् तत एव विपाकाभावः स्यादिति कथमुक्ताऽप्यवसेति चेत् । अत्रोच्यते ।

विविधयोनिहेतुषु कर्मसु यत्र रागादिरन्तकाले उद्बोधो भवति मरणानन्तरं तामेव योनिं जीव. प्राप्नोति, नेतरामित्यन्वयव्यतिरेकाभ्यां कर्मवद्रागादिदोषोऽपि विपाकहेतुः। पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् * कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु इत्यादिस्मृतेः। तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्येति श्रुतेश्च। नरकादिष्वपि रागाद्यनुसारेणैव विपाको भवति निषिद्धस्त्र्यादिसमासक्तानामेव तप्तलोहमयनारीसमालिङ्गनादिफलश्रवणात्। अतः क्लेशोऽपि विपाकारम्भे स्वातन्त्र्येण हेतुः। ज्ञानोत्तरं चारुविपाकः समाप्यत एव, न त्वारभ्यते इति न तत्र क्लेशापेक्षा। तस्माज्ज्ञानस्य क्लेशाख्यसहकार्युच्छेद एवाग्रहो, न कर्मनाशे। प्रारब्धकर्मणोऽपि नाशप्रसङ्गात्। नच प्रारब्धातिरिक्तकर्मत्वेन ज्ञाननाश्यत्वेति वाच्यम्। ज्ञानाग्निः सर्वकर्माणीत्यत्र सर्वपदसङ्कोचप्रसङ्गात्॥ अतो ज्ञानेन विपाकारम्भहेतुतया क्लेशाख्यहेतूच्छेदद्वारा कर्माशयस्य दाह एव क्रियते। स च क्रियमाणस्यानुत्पादः प्राचीनस्य बीजशक्तिनाशश्च। अत एव, ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधा इति गीतादौ ज्ञानेन कर्मणो दाहः श्रूयते, न नाशः। किन्तु चासम्प्रया इव चित्तनाशादेव नाशः। धर्मिनाशस्य धर्मनाशहेतुतायाः क्लृप्तत्वात्। अत एव तत्त्वविदः सञ्चितक्रियमाणयोर्धर्माधर्मयोस्तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति श्रुत्या प्रतिपादितमन्येन ग्रहणं सङ्गच्छते। नाशे ग्रहणासम्भवात्। तस्मान्निरुक्तश्रुतिसूत्राणामप्येतदर्थानुसारिणार्थो व्याख्येयः। इत्थञ्च सत्कार्यवादपक्षे स्वरूपतस्तेषां नाशाभावेन सत्त्वेऽपि बीजभावस्य ज्ञानेन नष्टत्वाद्दग्धबीजमायानां शालितण्डुलानामिव दृष्टभोगानुकूलत्वमात्रमिति ज्ञानिनां कर्माशयो नास्त्यदृष्टजन्मभोग्य., किन्तु दृष्टभोगनाश्य एवेति दिक्॥

ननु यदि सत्कर्मपरिपाकेन प्राप्तचरमदेहस्य ज्ञाने सत्यपि दृष्टविपाकसाधर्म्येऽन्यस्याऽतिविशेषो न स्यात्। विधिनिषेधशास्त्रेऽधिकृतो विहितानि निषिद्धानि वा यावन्ति कर्माणि सञ्चिनोति तावद्भिरेक एक आरभ्यते इत्येकभविकपक्षे ज्ञानिनामपि नियतादृष्टजन्मभोगस्यैवाऽङ्गीकारात्। युक्तश्चायं पक्ष.। तथाहि। नैकं कर्मैकस्य जन्मनः कारणम्। अनादिकालसञ्चितानां क्रियमाणानां च मध्ये किं कर्म

प्रथमं फलं दास्यति किं पश्चादिति फलक्रमे नियमाभावाल्लोकानां पुण्यानुष्ठाने फलानिश्चयप्रसक्त्या प्रवृत्तिलोपापत्तेः । नच यदाकदाचित् फलसम्भवेनैव प्रवृत्तिर्भविष्यति । फलसाधनताज्ञानमात्रस्य प्रवृत्तिकारणत्वादिति वाच्यम् । भाव्यनन्तकालमध्ये भाविपापादिना अनुष्ठीयमानकर्मणो विनाशसम्भवाज्झटिति भोगकामनयैव कर्मानुष्ठानात् । नाप्येवं कर्मानेकजन्मनां कारणम् । अनेकेषु जन्मसु कृतं क्रियमाणं च कर्मैकैकं प्रत्येकमेवानेकस्यासंख्यजन्मनः कारणमिति तद्विरुद्धफलदस्य कर्मणः फलकालाभावप्रसक्त्या तत्र प्रवृत्तिलोपापत्तेः । नाप्यनेकानि कर्माणि मिलित्वा अनेकजन्मनां कारणानि । बहूनां जन्मनां युगपदसम्भवेन क्रमिकोत्पत्तेरवश्यवाच्यतया प्रथमं किं पश्चात् किमिति क्रमे नियमाभावात् पुण्यानुष्ठाने फलानिश्चयप्रसक्त्या प्रवृत्तिलोपप्रसङ्गदोषतादवस्थ्याच्छीघ्रफलकामनयैव कर्मानुष्ठानस्योक्तत्वात् । तस्मादेकं कर्मैकं जन्म करोति । एकमनेकानि जन्मानि करोति, अनेकान्येकजन्मानि कुर्वन्तीति पक्षत्रयस्यासम्भवाज्जन्मारभ्य मरणपर्यन्तं विहितप्रतिषिद्धैर्यो धर्माधर्मसमूहो गुणप्रधानभावापन्न उत्पादितः स मरणकाले आरब्धकर्मभोगसमाप्त्या लब्धावसरः सन् स्वफलदानार्थं मरणं प्रसाध्य प्रवृद्धवेगमेकमेव जन्म फलयोग्यं करोति, नानेकमित्यैकभविकपक्ष एव युक्तः । नन्वेवं विधिनिषेधानधिकृतदेवतिर्यगादिशरीरलाभे प्रायेणोत्तरमपुनर्भवप्रसङ्गः । अनधिकारेणापूर्वस्यानर्जनात् । प्राचीनसर्वकर्मणां च तस्मिन्नेव शरीरे समापनादिति चेन्न । नरकस्वर्गादिजन्मकर्मणामेव ब्राह्मणस्थावरादियोनिलाभपर्यन्तश्रवणाच्छ्रवणानुक्तकालविशेषस्यैकभविकत्वनियमाच्छान्तिपर्वण्यापद्धर्मे— एवं खलु कपोतश्च कपोती च पतिव्रता * लुब्धकेन हता स्वर्गं गता तेनैव कर्मणेत्यादिना तिर्यञ्चामपि पुण्यश्रवणात् । परस्त्रीगमनादिपापश्रवणाच्च । अन्येन्द्रादेरपि ब्रह्महत्यादिश्रवणाच्च शरीरान्तरोपभोग्यदेहोत्पत्त्यङ्गीकाराद् वा दोषाभावात् । अखिलप्राणिकृतादग्धाप्रतिबद्धाखिलकर्मणामेवैकभविकत्वाङ्गीकारात् । अत प्रायश्चित्ततत्त्वज्ञानादिना दग्धस्य शीघ्रभोगदायिनाऽवरुद्धस्य चैकभविकत्वाभावेऽपि न हानिः । न वा ज्ञानिनामन्यसाम्यम् । तेषामेवापुनर्भवाङ्गीकारादिति संक्षेपः । कर्मभिः शरीरान्तरोत्पत्तिश्च सत्त्वाद्यनुसारिणी ।

येन येन हि भावेन यद्यत् कर्म करोत्ययम् * तेन तेन शरीरेण तत्तत्फलमुपाश्नुते इति मन्वादिस्मृतेः । सत्वान्वयश्चाप्तुं प्रयत्नाधीनः शास्त्रीयेष्टसाधननाशनादिना सत्त्वसम्पत्तमोनिवृत्त्योः सम्भवात् । सत्वाद्याधिर्भावेन च शक्यते कालान्तरोपभोग्य तच्छेषभूतं शरीरान्तरमपि प्रत्याक्रष्टुम् । पुरुषकारप्रधानस्य देशकालविशेषसमवधानस्यापि सम्भवात् । नन्वयुक्तकालान्तरोपभोग्यस्य कालान्तरेऽभिव्यक्तिरितिचेन्न । चिराचिररूपकालस्याभिव्यञ्जकमान्यामप्रवेशाच्चित्रया यजेत पशुकाम इत्यादौ पशुकामस्य कृतायामपि साङ्गायां पशूनां सद्योऽनुपलम्भाद् बाधिता श्रुतिरिति बाह्येन प्रत्युपस्थिते पशुकामस्य चित्राऽभ्युपाय इत्येतन्मात्रे तात्पर्यं, न तु चिराचिररूपकालेऽपि। तेन यस्य चित्रा सम्पन्ना तस्यासति प्रतिबन्धके पशुभिरवश्य भवितव्यम् । प्रतिबन्धके सति तु कालान्तर इति शास्त्रकृद्भिर्व्यवस्थापितत्वात्।किन्तु भोक्त्रतिशयाधायी वयोविशेषरूपः भोक्तृभोग्योभयाऽतिशायी शीतोष्णवर्षारूपऋतुविशेषरूपो जायते इति विशेषः। यथाह हारीतः— यस्मिन् यस्मिन् वयसि यः करोति शुभानि तस्मिन् तस्मिन् वयसि शारीरवाचिकमानसान्याप्नोतीति। तस्मादैकभविकपक्षे भगवद्भजनादिना यद्यपि शक्यते शरीरपातोत्तरं झटिति नारदादिवच्छरीरं प्रत्याक्रष्टुं, तथापि तस्य कर्माशयहेतुकत्वेन कैवल्यापेक्षया बन्धत्वमेवेत्यनुपादेयफलत्वमेव मुमुक्षोरिति सूत्रद्वयतात्पर्यार्थं । यदि तु परमेश्वरेच्छयैव सर्वं तदा तु सुतरामैकभविकः कर्माशयः । परन्तु दृष्टजन्मवेदनीय एव । अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इत्यादिस्मृतेः । अणिमाण्डव्यादीनां शैशवे कृतकर्मणामिहैव दु.खफलश्रवणाच्च । ज्योतिष्टोमादिकं च विधिसिद्ध्यर्थमात्रमनुष्ठेयम् । ईशसृष्टजीवानां मरणानन्तरमीश एव लयाङ्गीकारेण भवान्तराभावात् । तस्मादस्मिन् पक्षे एक एव भव. कार्यतयास्मिन्नस्तीति नार्थः । किन्त्वेकस्मिन्नेव शरीरे फलस्य भावः सद्भावोऽस्तीत्यैकभविकशब्दार्थः।अस्मिंश्च पक्षे कर्मतत्त्वज्ञानादिसाधनानामीशप्रसादकोपौ प्रत्येव कारणता, न फलं प्रति । फलमत उपपत्तेरिति सूत्रयता व्यासेन तथा ज्ञापनात् । अतो न कस्याप्यप्रामाण्यमिति संक्षेपः ॥ १३ ॥

अधुना जात्यादीनां हर्षत्यापि फलमाह ।

## ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥

ते जात्यायुर्भोगाः सर्व एव ह्लादपरितापफलाः समुचित-सुखदुःखफलकाः। कुतः । पुण्यापुण्यहेतुत्वात् । समुचितधर्माधर्म-हेतुकत्वादित्यर्थः । सुखावच्छेदेन पुण्यहेतुकाः, दुःखावच्छेदेनापुण्य-हेतुका इति यावत्। सर्वस्यापि फलस्य दुःखसंभिन्नत्वादित्यर्थः॥१४॥

ननु दुःखफला हेया भवन्तु सुखफलास्तु कथं हेया इत्यत आह—

## परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

परिणामश्च तापश्च संस्कारश्च तज्जन्यानि दुःखानि तैर्योगात् तत्कारणत्वादिति यावत्। विषयाणां भोगे तृष्णाभिवृद्धिः परिणामः, भोगपरिपन्थिनि द्वेषस्तापः, भोगानुभवेन भोगस्मृतिजनकः संस्कारः । एतेषां दुःखसाधनत्वं स्फुटमेव । गुणवृत्तिविरोधाच्चेति । गुणानां सत्त्वरजस्तमसां वृत्तयः सुखदुःखमोहास्तासां विरोधः पर-स्परमभिभाव्याभिभावकत्वं, तस्मादित्यर्थः। गुणवृत्त्यविरोधादिपाठे तु, गुणवृत्तीनां सुखादीनां गुणप्रधानभावेन समावेशादित्यर्थः। विवेकिन इत्यनेन विषयसुखं दुःखसंभिन्नतया सुखकाले योगिन एव पश्यन्तीति सर्वं दुःखं नायोगिनः। सुखकाले दुःखतयाऽनुभवा-ऽभावात्। ननु सुखसाधनतया सुखसंभिन्नतया च सर्वं सुखमेव कथं भवतीतिचेन्न। बाहुल्यस्यैवात्र नियामकत्वात्। दुःखबाहुल्यस्य लोके स्फुटत्वात्। उक्तं च विष्णुपुराणे— कलत्रमित्रपुत्रार्थगृहक्षेत्र-धनादिकैः * क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखमिति ॥१५॥

इदानीं हेयं हेयहेतुर्हानं हानहेतुश्चेति चतुष्टयं व्युत्पादयितुं विशिष्य हेयं दर्शयति—

## हेयं दुःखमनागतम् ॥ १६ ॥

अतीतस्यातीतत्वादेव वर्तमानस्य च भोगेनैव क्षयसम्भवा-दनागतमेव हेयमित्यर्थः ॥ १६ ॥

हेयहेतुमाह—

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टा पुरुषः, दृश्यं प्रधानम्। तयोः संयोगोऽविवेकख्यातिहेतुकं भोक्तृभोग्यत्वेन सन्निधानं हेयस्य दुःखस्य हेतुः कारणमित्यर्थः ॥१७॥

तत्र दृश्यस्वरूपं कार्यं प्रयोजनं चाह—

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं
भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

प्रकाशः प्रपञ्चावभासः सत्त्वधर्मः, क्रिया प्रवृत्तिः रजसो धर्मः, स्थितिर्नियमस्तमसः, ताः प्रकाशक्रियास्थितयः शीलं स्वाभाविकं रूपं यस्य तत्तथाविधमिति स्वरूपमस्य निर्दिष्टम् । भूतेन्द्रियात्मकं भूतानि स्थूलसूक्ष्मभेदेन द्विविधानि । उभयमेतत् पृथिव्यादीनि च गन्धतन्मात्रादीनि च इन्द्रियाणि बुद्धीन्द्रियकर्मेन्द्रियान्तःकरणभेदेन त्रिविधानि । उभयमेतद् ग्राह्यग्रहणरूपतयाऽऽत्मस्वरूपाभिन्नः परिणामो यस्य तत्तथाविधमित्यनेन कार्यमस्योक्तम्।भोगः सुखदुःखान्यतरसाक्षात्कारः । अपवर्गः संसारनिवृत्तिरूपकैवल्यं, तौ भोगापवर्गावर्थः प्रयोजनं यस्य तत्तथाविधमित्यनेन प्रयोजनमस्योक्तम् । तदिदं गुणत्रयं प्रपञ्चकारणं भोगमोक्षप्रयोजनकं दृश्यपदार्थ इत्यर्थः ॥ १८ ॥

गुणानामिव गुणविकाराणामपि दृश्यत्वज्ञापनाय गुणानामवस्थाः प्रदर्शयति—

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

विशिष्यन्ते व्यावर्त्यन्ते इति विशेषा व्यावृत्ताः, पञ्च भूतानि दशेन्द्रियाणि, एकादशं मनश्चेत्येते षोडशविकारा एव । तेषां प्रकृतयो बुद्धेर्विकृतयः पञ्चतन्मात्राहङ्काराः षड् विशेषाः लिङ्गमात्रं महत्तत्त्वम् अलिङ्गं गुणानां साम्यावस्थारूपं प्रधानम्। एतानि चत्वारि गुणपर्वाणि गुणानामवस्था इत्यर्थः ॥ १९ ॥

दृश्यं निरूप्य द्रष्टारं निरूपयति—

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययाऽनुपश्यः ॥ २० ॥

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः । ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन * ज्ञानस्वरूप एवात्मा नित्य. सर्वगतः शिव इत्यादिस्मृतेः । एतेन मतान्तराभिमतस्वरूपतानिरा- स. । मात्रपदेन गुणान्तरस्यापि व्यवच्छेदः । अत शुद्धोऽपि परा- र्थ्याच्चेतनत्वपरिणामित्वादिरूपाशुद्धिरहितोऽपि । एतेन भूतेन्द्रिया- द्यन्तर्भावव्यावृत्तिः ॥ प्रत्ययानुपश्यः ॥ प्रत्ययं बुद्धिवृत्तिमनुसृत्य पश्यतीति प्रत्ययानुपश्यः । स्वस्य बुद्ध्यविवेकाद् वृत्तिभिरेकीभूत. सन् शब्दादीन् पश्यतीत्यर्थः । एतेन द्रष्टरि प्रमाणं सूचितम् । चेतनं विना जगतो भानानुपपत्तेरिति भाव. ॥ २० ॥

प्रमाणं दर्शयति—

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

तस्य पुरुषस्यार्थः प्रयोजनं भोगापवर्गावेवार्थः प्रयोजन यस्य स तथोति मध्यमपदलोपिसमासः । पुरुषस्य भोगापवर्गप्रयोजनक एव दृश्यस्यात्मा स्वरूप कार्यकारणात्मक गुणत्रय, न स्वार्थमित्य- र्थं । तथाच, गुणाः परार्थाः, संहत्यकारित्वात् । शय्यादिवदित्याद्य- नुमानेन दृश्यातिरिक्तस्य पुरुषस्य सिद्धिरिति भावः । तदर्थमेव दृश्यमित्येतावन्मात्रेणैव निर्वाहेऽप्यात्मपद घात्वर्थे दर्शने तदर्थत्वा- न्वयभ्रमनिरासाय प्रयुक्तमिति दिक् ॥ २१ ॥

ननु पुरुषप्रयोजनक दृश्यस्य स्वरूप यदि तर्हि पुरुषार्थहेतुरूप- स्थितिकत्वेन चेतनदृष्टिलब्धसत्ताकस्य भोगापवर्गरूपे पुरुषार्थे कृते सत्त्वस्यानायोगादत्यन्तोच्छेदप्रसङ्ग । तथाच प्रकृतिनित्यत्वभगव- न्नित्यैश्वर्यादिसिद्धान्तहानिः स्यात् । इदानीं संस्कारश्च नोपलभ्येत। यदि नाश एव नाशस्तर्हि जीवस्यात्यन्तिकी संसारनिवृत्तिर्न स्यात् । कारणस्य सत्त्वात् । तत्राह—

## कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥

कृतः समापितोऽर्थो यस्येति कृतार्थम । एकं कञ्चिन्मुक्तपुरुष प्रति गुणादिक नष्ट प्रयोजनाकरणादद्रष्टो राजयक्ष्ममपि सामान्यतो न नष्टम । कुत. । तदन्यसाधारणत्वात् । तस्मिन्नन्यपुरुषेऽसाधारण- त्वादित्यर्थं । सोऽयमर्थ , अजामेका लोहितशुक्लकृष्णां बह्वीः प्रजा

जनयन्तीं सरूपाः * अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इत्यादिश्रुतिसिद्ध. एतदुक्तं भवति। प्रधानस्य कृतार्थं प्रति न प्रवृत्तिः । अनागतायस्यैव पुरुषार्थस्य प्रवृत्तिहेतुत्वात् । अकृतार्थं प्रति तु घटते महदाद्याकारेण प्रवृत्तिरतो नोकदोष इति संक्षेप. ॥ २२ ॥

द्रष्टृदृश्यौ व्याख्याय हेयहेतुं संयोगं निरूपयति—

## स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥२३॥

स्व दृश्यम् । तस्य शक्तिः जडत्वेन भोगयोग्यता । स्वामी पुरुषस्तस्य शक्तिश्चेतनत्वेन भोक्तृयोग्यता, स्वरूपाभिमकैव । तयोः स्वस्वामिरूपयोः शक्त्योः स्वरूपोपलब्धिहेतुः स्वरूपेण भोक्तृभोग्यभावेन भाव्यभावकभावेन चोपलब्धौ हेतुः कारणं भोक्तृभोग्यभावेन संनिधानं संयोग इत्यर्थः । अथवा, सुखदुःखाद्याकारदृश्यबुद्धिस्वरूपस्योपलब्धिर्भोग । स्वामिस्वरूपस्य सच्चिन्मात्रस्योपलब्धिहेतुरपवर्गहेतुर्ज्ञानम् । तद्धेतुः संयोग इत्यर्थः ।

अथवा स्वशक्तिर्दृश्य भोग्यतायोग्यत्वात् स्वामिशक्तिर्द्रष्टृभोक्तृयोग्यत्वात् । तयो स्वरूपोपलब्धौ हेतुर्यः संयोगविशेषः स एव द्रष्टृदृश्यसंयोगोऽत्र हेयहेतुरुक्तो, न सम्बन्धमात्रम् । प्रलयमोक्षादिसाधारण्यादिति भाव. । सूत्रे स्वरूपपदं विवेकख्यातिपर्यन्तस्य दर्शनसामान्यस्य संयोगजन्यत्वज्ञापनेन हेयपक्षे प्रवेशज्ञापनाय । तदुक्तं— त्यज धर्ममधर्मं च उभे सत्यानृते त्यज * उभे सत्यानृते त्यक्त्वा येन त्यजसि त त्यजेति । एवं विवेकख्यात्यन्ते कार्ये जनिते कृतकृत्येन जीवेन प्रधानादेरदर्शनात् तं प्रति नष्टत्वेन दर्शनरूपकार्यावसानं एव संयोग इत्यतो दृष्टस्वरूपोपलब्धिर्द्रष्टृदृश्ययोर्वियोगकारणमित्यपि ज्ञापितम् ॥ २३ ॥

संयोगदर्शनावसानत्वं समर्थयिष्यन् दर्शनोच्छेद्यामविद्यां तत्कारणमाह—

## तस्य हेतुरविद्या ॥ २४ ॥

तस्य द्रष्टृदृश्यसंयोगस्य, अविद्या प्रवाहानादिरनात्मन्यात्मबुद्ध्यादिरूपा वासना हेतु । बीजाङ्कुरन्यायेन स्वप्रयोज्यवासनाद्वारा

कारणमित्यर्थः । अहमिति दृग्दृश्ययोरभेदभ्रान्तिनद्वासनावासितं चित्तं प्रलयादौ प्रधानभावमुपगतं, सर्गकाले पूर्वपूर्वसंस्कारादृष्टप्रयुक्त भोगापवर्गार्थं पुरुषस्य सन्निहितं भवति । तेनैव संयोगेन भोगापवर्गौ भवत इति यावत् ॥ २४ ॥

हेयं हेतुं च व्युत्पाद्य मोक्षापरपर्यायं हेयं हेयहानं व्युत्पादयति—

तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम् ॥ २५ ॥

तदभावादिति ॥ तस्या अविद्यायाः अभावान्नाशाद् हेयसाधनस्य दृग्दृश्यसंयोगस्याभावो निवृत्तिर्हानपदार्थः । तस्य पुरुषार्थत्वमाह ॥ तद् दृशः कैवल्यमिति ॥ तद् हानं दृशेः पुरुषस्य कैवल्य, प्राताप्रातविवेकरीत्या मोक्ष इत्यर्थः । तथाहि । अतीतदुःखस्यातीतत्वादेव, वर्त्तमानस्य च स्वोत्तरोत्पन्नविरोधिगुणेनैव नाशसम्भवात् । अनागतस्य तु निवर्त्तयितुमशक्यत्वादेव न तत्त्वज्ञानेन हानं वक्तुं शक्यम् । अतः साक्षात्तत्साधनभूतस्य विवेकख्यातिनिमित्तस्य संयोगस्य निवृत्तिरेव तत्त्वज्ञानं साध्या। हानक्रियैव चानागतायस्यापरिपालनेन भाविदुःखप्रतियोगिकापि भवतीति स्वतः पुरुषार्थरूपा च भवति । इत्थञ्चानागतदुःखस्य, हेयं दुःखमनागतमिति हानक्रियाकर्मतारूपहेयत्वोक्तिरपि सगच्छते इति दिक् ॥ २५ ॥

तदभावात् संयोगाभाव इत्यनेनात्यन्तिकदुःखनिवृत्तेः पुरुषार्थरूपतया ज्ञापितायाः कारणमाह—

विवेकख्यातिरविप्लवा हानोपाय इति ॥ २६ ॥

ननु ज्ञानादेव चेन्मोक्षस्तदाऽसंप्रज्ञातयोगान्तरप्रयासानुसरणं व्यर्थम् । आत्मतत्त्वस्यौपनिषदस्य श्रुत्यैव ज्ञानसम्भवादित्याशङ्क्य, आगमात् परोक्षैव विवेकख्यातिरुदेति नापरोक्षा, किन्तु सा भावनाप्रकर्षादेवेति ज्ञापयिष्यंस्तस्या विवेकख्यातेः स्वरूपमाह—

## तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

तस्य सप्तेति ॥ तस्य उत्पन्नसाक्षात्कारस्य प्रान्तभूमिः प्रज्ञा प्रकृष्टोऽन्तोऽवसानं यासां ताः प्रान्ताः । चरमा इति यावत् । प्रान्ता भूमयोऽवस्था यस्याः सा प्रज्ञा प्रान्तभूमिः, सप्तधा सप्तप्रकारा भवतीत्यर्थः । सप्तप्रकाराः प्रज्ञावस्थाश्चरमा भवन्तीति यावत् । ज्ञातव्यमखिलं ज्ञातं, न किञ्चिज्ज्ञातव्यमस्तीति या सैका । १ सर्वजिज्ञासानिवर्तकत्वात् प्रान्ता । न हीयमज्ञस्याल्पज्ञस्य वा सम्भवति । तत्तदालम्बनसमाधिना प्रधानान्तप्रज्ञाया स्थिरायामपि आत्मजिज्ञासायाः सत्त्वेन तत्प्रज्ञायाश्चरमत्वात् । एवमग्रिमावस्थानां प्रान्तत्वमवगन्तव्यम् । हातव्याः सर्वे बन्धहेतवो हताः, न किञ्चिन्मम हातव्यमस्तीति या सा द्वितीया । २ । कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तं, न किञ्चिन्मे प्राप्तव्यमस्तीति या सा तृतीया । ३ । विवेकज्ञानसम्पादनेनाखिलं कर्त्तव्यं कृतं, न मे किञ्चित् कर्त्तव्यमस्तीति या सा चतुर्थी । ४ । एताश्चतस्रः प्रज्ञाः कार्यविषयनिर्मलज्ञानस्वरूपाः कार्यविमुक्तिसंज्ञाः । चित्तविमुक्तिसंज्ञास्तु तिस्रः । कृतार्थं बुद्धिसत्त्वमित्येका १ गुणाः कृताधिकारा गिरिशिखरच्युता इव पाषाणाः पाषाणविशेषा निरवस्थाना न पुनः स्थितिं यास्यन्ति । उपशममुपयान्तां मोहाभिधानरूपस्य योगकारणाभावात् । निष्प्रयोजनत्वाच्चामीषां कुतः प्ररोह इति द्वितीया । २ । गुणातीतोऽहं स्वरूपमात्रावस्थितः सच्चिदेकरस इति तृतीया । ३ । इत्थं त्रिप्रकाराश्चित्तस्वरूपविमुक्तिविषयत्वात् तथोच्यते । ईदृशसप्तप्रकारप्रज्ञावानेव ज्ञानी कुशल इत्युच्यते । अत एतादृश्यः प्रज्ञाः, जिज्ञासाजिहासाप्रेप्साचिकीर्षाशोकभयविकल्पनिवृत्तिफलाः सम्प्रज्ञातसमाधिं विना न सम्भवन्तीति तदन्तप्रयासः सार्थक एवेति दिक् ॥ २७ ॥

ननु तथापि किमर्थं चित्तरोधहेतुप्राणनिरोधादिलक्षणो योगप्रयासः । मनोनिग्रहस्य श्रुतिजन्यात्ममात्रतत्त्वबोधेनैव सम्भवात् ।

तदुक्तम् । आत्मसत्यानुबोधेन न संकल्पयते यदा * अमनस्तां तदा याति तदभावे तदग्रहमित्यादि । अतस्तेन मनसो निग्रहे जाते स्वप्रकाशमात्मतत्त्वं केवलं स्वयमेव भासत इति समाधिसिद्धियोगाङ्गानुष्ठानप्रयासोऽनुचित इत्याशङ्क्य, आत्ममात्रसत्यत्वबोधरहितानां बहिर्मुखानां सत्त्वयातिवादिनां च मनोनिरोधहेतुकेन चाश्रल्पनिरासेनैवात्मबोधो मोक्षाख्या शान्तिश्च भवतीति पूर्वमुक्तानेनकयोगाद् । साङ्गसमाधियोगेऽन्तर्भावयिष्यन् योगाङ्गानुष्ठानात् तद्भवतीत्याह—

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥

योगाङ्गानुष्ठानेति ॥ योगस्य तदङ्गानां च अनुष्ठानात् पौनःपुन्यरूपाद् अभ्यासाद् अशुद्धिक्षये चाञ्चल्यादिहेतुक्लेशादिलक्षणपापक्षये सति ज्ञानदीप्तिराविवेकख्यातेः विवेकख्यातिपर्यन्ता ज्ञानस्य श्रवणमनननिदिध्यासनजन्यस्य सर्वस्यापि दीप्तिः मिथ्याज्ञानेन अभिभवोऽश्रुतमतार्थग्राहित्वं च भवतीत्यर्थः । साङ्गयोगानुष्ठानस्य स्वजन्यधर्मजन्यशुद्धिद्वारा ज्ञानसाधनत्वमिति भावः । अथवा योगाङ्गानां धौतीवस्तीत्यादिषट्कर्मणां महामुद्रादीनां च अनुष्ठानाद् दृढाभ्यासाज्ज्ञानदीप्तिः । ज्ञायतेऽनेनेति ज्ञानं करणवर्गः । तस्य दीप्तिः रोगाद्यनभिघातेन तेजस्विता दृढता च, आविवेकख्यातेः विवेकख्यातिपर्यन्तं भवतीत्यर्थः। रोगादिना ज्ञानस्य कुण्ठीभावस्तु प्रसिद्ध एव । स चैतेष्वङ्गेष्वनुष्ठितेषु रोगप्रतिपन्थ्याश्च भवतीत्यर्थ ।तथाच करणदार्ढ्यद्वारा समाधिदार्ढ्यार्थकर्मयोगोऽपि प्रथमतोऽनुष्ठेयो रोगभीरुणेति भावः । स च कर्मयोगः षट्कर्मरूपो मुद्रारूपश्चेति द्विविधो निरूपित आकरे । यथा—

धौती वस्ती तथा नेति त्राटकं नौलिकं तथा ।
कपालभाती चैतानि षट् कर्माणि प्रचक्षते ॥
कर्मषट्कमिदं गोप्यं देहशोधनकारकमिति ॥
महामुद्रा महाबन्धो महावेधश्च खेचरी ॥
शक्तिचालो मूलबन्ध उड्डीयानं ततः परम् ।
जालन्धराभिधो योगो विपरीतकृतिस्तथेति ॥
लक्षणानि च तत्रैवोक्तानि । तत्र धौती ॥ १ ॥

चतुरङ्गुलविस्तारं सिक्तं वस्त्रं शनैर्ग्रसेत् ॥
पुनः प्रत्याहरेदेतद्भ्यासाद्धौतिकर्मचित् ।
कासश्वासप्लीहकुष्ठकफरोगादयः क्रमात् ॥
धौतीकर्मप्रभावेन प्रयान्त्येव न संशयः, इति ॥

अथ बस्ती ॥ २ ॥

नाभिदघ्ने जले पायुन्यस्तनालोत्कटासनः ।
आधाराकुञ्चनं कुर्याद्भ्यासाद् बस्तिकर्म तत् ॥
गुल्मोदरं चापि वातत्पीहपित्तकफाङ्कवान् ।
बस्तिकर्मप्रभावेन बाध्यन्ते सकलाऽऽमयाः ॥
धात्वेन्द्रियान्तःकरणप्रसादं दद्याच्च कान्तिं दहनप्रदीप्तिम् ।
अशेषदोषोपचयं निहन्यादभ्यस्यमानं जलबस्तिकर्मेति ॥

अथ नेती ॥ ३ ॥

सूत्रं वितस्तिसुस्निग्धं नासानाले प्रवेशयेत् ।
मुखान्निर्गमयेत् सा हि नती सिद्धैर्निगद्यते ॥
कपालशोधिनी चैव दिव्यदृष्टिप्रदायिनी ।
जत्रोर्ध्वजातरोगौघाञ्जयत्याशु नेतिविद्, इति ॥

अथ त्राटकम् ॥ ४ ॥

निरीक्षेन्निश्चलदृशा सूक्ष्मलक्ष्यं समाहितः ।
अश्रुपातादिपर्यन्तमाचार्यैस्तत् त्राटकं मतम् ॥
मोहनं नेत्ररोगाणां तन्द्रादीनां कपाटकम् ।
एतच्च त्राटकं गोप्यं यथा वध्वा रतिः सदेति ॥

अथ नौली ॥ ५ ॥

ग्यानन्दावर्तवेगेन तुन्दं सव्यापसव्ययोः ।
नतांसो भ्रामयेदेषा नौली योगे प्रचक्षते ॥
मन्दाग्निसन्दीपनपाचकाग्निसन्धायिकानन्दकरी तथैव ।
अशेषदोषामयशोषणी च हठक्रिया मौलिरीय हि नौली ॥

अथ कपालभाती ॥ ६ ॥

भस्त्रेव लोहकाराणां रेचपूरौ ससंभ्रमौ ।
कपालभाती विख्याता कफदोषप्रदाहिनी, इति ॥

अथ महामुद्रा ॥ १ ॥

अपसव्यन सपीड्य पादमूलेन सादरम् ।

गुरूपदेशतो योनिं गुदमेढ्रान्तरालगाम् ॥
सव्यं प्रसारितं पादं धृत्वा पाणियुगेन तु ।
नवद्वाराणि संयम्य चिबुकं हृदयोपरि ॥
चित्तं चतुष्पथे दत्वा प्रारभेद्वायुधारणम् ।
महामुद्राभवेदेषा सर्वतन्त्रेषु गोपिता ॥
वामाङ्गेन समभ्यस्य दक्षाङ्गेनाऽभ्यसेत् पुनः ।
प्राणायामं समं कृत्वा योगी नियतमानस. ॥
मुद्रामेतां तु सम्प्राप्य गुरुवक्त्रात् सुगोपिताम् ।
अभ्यासयोगतो योगी मन्दभाग्योऽपि सिद्ध्यति ॥
सर्वासामेव नाडीनां चालनं बिन्दुधारणम् ।
जारणं तु कषायस्य पातकानां विनाशनम् ॥
कुण्डलीबोधनं वायोर्ब्रह्मरन्ध्रप्रवेशनम् ।
सर्वरोगोपशमनं जठराग्निविवर्द्धनम ॥
कुर्यादभ्यासनस्त्वषा महामुद्रा सुगोपिता ॥
अथ महाबन्ध ॥ २ ॥
योऽस्यां प्रसारितः पादो विन्यस्य तमुरूपरि ।
गुदयोनीं समाकुञ्च्य नीत्वा चापानमूर्ध्वगम् ॥
योजयित्वा समानेन कृत्वा प्राणमधोमुखम् ।
बन्धयेदूर्ध्वगत्यर्थमपानप्राणयो सुधीः ॥
कथितोऽयं महाबन्धः सर्वसिद्धिप्रदायकः ।
नाडीगलद्रसव्यूहमूर्ध्वं नयति योगिन' ॥
उभाभ्यां साधयेत् पद्भ्यामेकैकं सुप्रयत्नतः ।
सततस्त्र तु केवाग्निरकण्ठबन्धं विसर्जयेत् ॥
राजदन्तद्वय तत्र जिह्वयोत्तम्भयेदिति ॥
अथ महावेधः ॥ ३ ॥
महावेध स्थितो योगी कृत्वा पूरकमेकधा ।
वायूनां गतिमावृत्य निभृतं कण्ठमुद्रया ॥
समहस्तयुगो भूमौ स्थितो संताडयच्छनैः ।
पुटद्वयं समाक्रम्य वायु. स्फुरतिमध्यग. ॥
सामसूर्याग्निसम्बन्धं जायते चामृतायते ।
महावेधोऽयमभ्यासान्महासिद्धिप्रदायकः ॥

वलीपलितवेपघ्नः सेव्यते साधकोत्तमैः ।
एतत्त्रयं महागुप्तं जरारोगविनाशनम् ॥
वह्निवृद्धिकरं चैव सर्वसिद्धिप्रदायकमिति ॥
अथ खेचरी ॥ ४ ॥
छेदनचालनदोहैर्जिह्वां संवर्द्धयेत्तावत् ।
यावदियं भ्रूमध्ये स्पृशति तदा खेचरीसिद्धिः ॥
कलां पराङ्मुखीं कृत्वा त्रिपथे परिवर्त्तयेत् ।
सा भवेत् खेचरी मुद्रा व्योमचक्रं तदुच्यते ॥
रसं समूर्ध्वगां कृत्वा क्षणार्धं यदि तिष्ठति ।
विषैर्विमुच्यते योगी व्याधिमृत्युजरादिभिः ॥
खेचर्या मुद्रितं येन विवरं लम्बिकोर्ध्वतः ।
तस्य न क्षरति बिन्दुः कामिन्यालिङ्गितस्य च ॥
चलितोऽपि यदा बिन्दुः सम्प्राप्तश्च हुताशनम् ।
व्रजत्यूर्ध्वं हि तच्छक्त्या निरुद्धो योनिमुद्रया ॥
चित्तायत्तं नृणां शुक्रं शुक्रायत्तं च जीवनम् ।
तस्माच्चित्तं च शुक्रं च रक्षणीयं प्रयत्नतः ॥
उभयो रक्षणे हेतुः खेचर्येव न संशयः ॥
इयं व्युत्पादिता स्कान्दे—
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥
चित्तं चरति खे यस्माज्जिह्वा चरति खे गता ।
तेनैषा खेचरी नाम मुद्रा सिद्धैर्निगद्यते, इति ॥
अथ शक्तिचालनम् ॥ ५ ॥
आधारकमले सुप्तां चालयेत् कुण्डलीं दृढाम् ।
अपानवायुमारुह्य बलादाकृष्य बुद्धिमान् ॥
शक्तिचालनमेवं हि प्रत्यहं यः समभ्यसेत् ।
अग्निवृद्धिर्भवेत्तस्य रोगाणां च विनाशनम् ॥
विहाय मुद्रां भुजगीं स्वयमूर्ध्वं भवेत् खलु ।
तस्मादभ्यसनं कार्यं योगिना सिद्धिमिच्छता ॥
अथ मूलबन्धः ॥ ६ ॥
पादमूलेन संपीड्य गुदमार्गं सुयन्त्रितम् ।

बलादपानमाकृष्य बलादूर्ध्वं समभ्यसेत् ॥
कथितोऽयं मूलबन्धो जरामरणनाशनः ।
अग्निवृद्धिर्मयैतस्य रोगाणां च विनाशनम् ॥
अथाड्डीयानम् ॥ ७ ॥
सति वज्रासने पादौ कराभ्यां धारयेद् दृढम् ।
गुल्फदेशसमीपे च उदरं तत् प्रपीडयेत् ॥
पश्चिम तानमुदरं कारयेच्चिबुकं हृदि ।
शनैः शनैर्यथा प्राणस्तुन्दसिन्धिं न गच्छति ॥
सर्वेषामपि बन्धानामुत्तमो ह्युड्डियानकः ।
षण्मासमभ्यसन् मृत्युं जयत्येव संशयः ॥
नित्य य कुरुत योगी चतुर्वारं दिने दिने ।
तस्य नाभेर्विशुद्धिः स्याद् येन सिद्धो भवेन्मरुत् ॥
अथ जालन्धरबन्धः ॥ ८ ॥
बद्ध्वा गले शिराजालं हृदये चिबुकं न्यसेत् ।
बन्धो जालन्धरः प्रोक्तो देवानामपि दुर्लभः ॥
एतस्याभ्यासतो योगी योगसिद्धिमवाप्नुयात् ।
अथ विपरीतकरणी ॥ ९ ॥
ऊर्ध्वनाभिरधस्तालुरूर्ध्वंभानुरध शशी ।
करणी विपरीताख्या सर्वव्याधिविनाशिनी ॥
पुनःप्रकारमाह दत्तात्रेयः—
अध शिराश्चोर्ध्वपादः क्षणं स्यात् प्रथमे दिने ।
क्षणाच्च किञ्चिदधिकमभ्यसेच्च दिने दिने ॥
गुरूपदेशतः सम्यङ् न तु शास्त्रार्थकोटिभिः ।
वलिश्च पलितं चैव षण्मासार्धे न दृश्यते ॥
याममात्रं तु यो नित्यमभ्यसेत् स तु कालजित् ।
नित्यमभ्यासयुक्तस्य जाठराग्निविवर्धनम् ॥
आहारो बहुल तस्य कार्य्योऽल्पं तु विनश्यति ।
तेन नाभिस्थितो देवो भास्करो दहनात्मक ॥
तालुमध्य स्थिताच्चन्द्राद्गलित स्वऽमृत मधु ।
नैव नश्यत्सेन शक्ता योगेनानेन वै चित ॥
विशुद्धो रोधता गच्छेत् सर्वाङ्गेषु नत. कमादित्यादि ॥

एतच्च सर्वं, योगाङ्गानुष्ठानादिति सूत्रे सूत्रितमपि हठयोगाऽङ्गत्वेन देहसिद्धिमात्रफलत्वेन साक्षाद्राजयोगाऽनङ्गत्वात् कण्ठरवेण सूत्रकृता नोक्तमिति मन्तव्यमिति संक्षेपः ॥ २८ ॥

कानि पुनस्तानि साक्षाद्राजयोगस्याङ्गानि यैरशुद्धिक्षये ज्ञानदीप्तिस्तत्राह—

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥

तत्र यमाः स्वत एव सफलत्वादत्यावश्यकाः सर्वमुमुक्षुजनसेव्या आदौ, पश्चात् तत्सापेक्षा नियमाः । एतदुभयाधीनचित्तस्थैर्यसापेक्षाण्यासनानि । तत्सापेक्षः प्राणायामः । तत्सापेक्षः प्रत्याहारः । तत्सापेक्षा धारणा । तत्सापेक्षं ध्यानम् । तत्सापेक्षः समाधिः सविकल्प इत्यष्टौ साक्षात् परम्परया वा निर्विकल्पस्य समाधेरङ्गानीत्यर्थः । अष्टाङ्गमैथुनक्रियानिष्पत्तेरङ्गिनोऽङ्गत्ववत् समाधेरङ्गिनोऽङ्गत्वं वा बोध्यम् । तेन न कोऽपि दोषः ॥ २९ ॥

तत्र के यमास्तत्राह—

अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥

तत्र प्राणिदुःखसाधनव्यापारो हिंसा । सा च सर्वानर्थहेतुः । तदभावोऽहिंसा । उक्ता चेश्वरगीतायां—

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्ता अहिंसा परमर्षिभिरित्यादिना । हिंसायाः सर्वकालमेव सर्वत्र परिहार्यत्वात् प्रथमं तदभावरूपाया अहिंसाया निर्देशः ॥ सत्यं यथादृष्टयथाश्रुतयथानुमितयथाख्यातविषयं व्यवहरणम् । तच्च द्विविधं—कथनरूपमाचरणरूपं च । तत्राद्यं, देवगुरुतीर्थादिसेवनमिष्टसाधनं, शालयो मधुरा इत्यादि । द्वितीयं, द्विजस्य यज्ञोपवीतादिधारणम् । तथा च यथार्थबोधनानुकूलो व्यापारः सत्यम् । तदानुकूल्यं तदर्थबोधनेच्छाकृतत्वम् । तदर्थबोधनेच्छया कृतो व्यापार इति यावत् । तेन बोधनीयस्य भ्रान्तिप्रमादिना विपरीतबोधेऽपि न वक्तुर्यथार्थवाक्येऽव्याप्तिरिति संक्षेपः । तद्भिन्नं चानृतमिति सि-

दम । यथा चैत्यवन्दनमिष्टसाधनमित्यादिवाक्यं, युधिष्ठिरस्य द्रोणं प्रति अश्वत्थामा हत इति वाक्यं च । स्वेच्छापूर्वकमन्नमानुकूलत्वात् शूद्रस्य यज्ञोपवीतधारणाद्याचरणं च । तत्र सत्यं निरूपितम् । तथैव । यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः * इति । तदप्यवध्यहिंसागोचरं ग्राह्यम् । अवध्यहिंसागोचरं सत्ये प्रत्यवायश्रवणात् अस्तेयं स्तेयानाचरणम् । स्तेयं परद्रव्यापहरणम् । परद्रव्यं = परस्य ममेदमिति स्वत्वास्पदं द्रव्यं, तस्यापहरणम् = अन्यायेन तस्मिन् ममेदमिति स्वत्वापादनम् । अन्यायश्च चौर्यं बलं च । तदुक्तं तत्रैव परद्रव्यापहरणं चौर्याद्वाथ बलेन वा * स्तेयं तस्यानाचरणमस्तेयं धर्मसाधनमिति । चौर्यात् समुदायैकदेशप्रच्छादनात् । बलेन दण्डादिप्रदर्शनाघातादिना ॥ ब्रह्मचर्यं सर्वावस्थोपस्थेन्द्रियसंयमः । उक्तं तत्रैव । कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा * सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते इति । सर्वावस्थासु यौवनाद्यवस्थासु । सर्वदा रात्र्यादावपि । सर्वत्र, अयोनौ वा वियोनौ वा पशुयोनौ तथैव चेति मनुः । मैथुनं सुखोत्पत्तिहेतुशुक्रक्षरणानुकूलो व्यापारोऽष्टविधः । स्मरणं स्पर्शनं केलिः प्रेक्षणं गुह्यभाषणम् * संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च * एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिण इत्यादिना शास्त्रेषु कथितम् । स च साभिलाषस्तस्य । तादृशस्यैव शास्त्रेषु निन्दनात् । तस्मात्साभिलाषस्मरणादिरूपाष्टविधमैथुनत्यागो ब्रह्मचर्यमिति सिद्धम् ॥ अपरिग्रहः देहयात्रामात्रातिरिक्तभोगसाधनानामस्वीकारः । अर्जनरक्षणक्षयसङ्गहिंसादिदोषभावनया भोगसाधनानां द्रव्यादिदेहान्तानामस्वीकारः । उक्तं तत्रैव द्रव्याणामप्यनादानमापद्यपि यथेच्छया * अपरिग्रह इत्याहुस्तं प्रयत्नेन पालयेदिति । द्रव्याणामपीत्यपिना देहेन्द्रियपरिग्रहः । तत्र द्रव्याणामनादानं स्वत्वासम्पादनं, देहादीनामभिमानत्यागः । फलं तेषां विशिष्य वक्ष्यति सूत्रकारः ॥ ३० ॥

एतेषां योगिभिरुपादेयं विशेषमाह—

जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥

जातिर्ब्राह्मणत्वादिः, देशस्तीर्थादिः, कालो नियतचतुर्दश्या-, समयः अनियतो ब्राह्मणभोजनाद्यवसरः । एतैः, ब्राह्मणादिकं गादौ चतुर्दश्यादौ ब्राह्मणादिप्रयोजनं विना च न हनिष्यामीति ण जातिदेशकालसमयैरनवच्छिन्ना न भवन्ति, किन्तु कर्मापि ापि कदापि कस्याप्यर्थे न हनिष्यामीति जात्यादिभिरनवच्छिन्नाः र्वभौमाः । सर्वासु क्षिप्तादिभूमिषु भवाः, महाव्रतमित्युच्यते र्थः । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरि-त्यादिश्रुत्या निवृत्तिधर्मस्यैव मोक्षसाधनत्वावगमान्निवृत्तिरूपा एते दा सर्वत्र सर्वावस्थासु सेविता महाफलदा एव भवन्तीति भावः । नेषु निवृत्तिरूपतया पारमहंस्यधर्मेषु वैराग्यरूपमुख्यचर्यायोगस्या-भावो वैराग्यहेतुकत्वादेतेषामिति दिक् ॥ ३१ ॥

नियमानाह—

शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि

नियमाः ॥ ३२ ॥

शौचसापेक्षः संतोषस्तत्सापेक्षं तपस्तत्सापेक्षः स्वाध्यायस्त-त्सापेक्षमीश्वरप्रणिधानमिति पञ्च नियमा इत्यर्थः । तत्र शौचं मल-नरसनम् । तच्च द्विविधं—बाह्यमाभ्यन्तरं च । तत्र बाह्यं मृज्जला-देना कायादिमलप्रक्षालनम् । आभ्यन्तरं— मैत्र्यादिभावनाभिश्चित्त-मलप्रक्षालनम् । तदुक्तमीश्वरगीतायाम्— बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः * मृज्जलाभ्यां भवेद् बाह्यं मनःशुद्धिरथा-न्तरमिति ॥ संतोषो यदृच्छालाभतस्तुष्टि उक्ता तत्रैव । यदृच्छाला-भतो नित्यम् अलं पुंसो भवेदिति * तां विद्याम् ऋषयः प्राहुः संतोष-सुखलक्षणमिति । यदृच्छालाभतः अनायाससिद्धलाभाद्, नित्यं सर्वदा ल पूर्णम् । तथा च पूर्णमिति बुद्धिरनुपादित्साहेतुः संतोषः । सत्याम-पीच्छायां क्षयादिदोषदर्शनादनुपादानमपरिग्रह इति यमनियमप-दार्थयोरसंकरः । अत्र यतमानादिवैराग्यहेतुकस्य मुख्यवैराग्यसाधन-स्य मैत्र्यादिभावनारूपस्य गौणचर्यायोगस्यान्तर्भावः ॥ तपः देव-द्विजगुरुपूजादि कृच्छ्रचान्द्रायणादि प्रागुक्तम् ॥ स्वाध्यायः उपनि-षदादिवृत्तिः प्रागुक्ता, प्रणवजपतदर्थभावनरूपस्येश्वरप्रणिधानस्य

हेतु । वेदान्तोपनिषद् ब्रह्म जपेद्याधिदैविकम्* अन्यानि च पवित्राणि विधिदृष्टानि शक्तितः * अभ्यस्याद्वेष जप्य शुद्धिकामो जितेन्द्रिय * सनियम्येन्द्रियग्राम तत प्रणवमभ्यसेदिति शौनकोक्ते । तत्रानयो. क्रियायोगस्यान्तर्भाव । ईश्वरप्रणिधान ससारमोचकस्येश्वरप्रसादस्यानुकूलो व्यापारो मोक्षमन्त्रजपतदर्थभावनादि । अतो ब्रह्मयोगशिवयोगमन्त्रयोगज्ञानयोगाद्वैतयोगभक्तियोगानामन्तर्भावोऽत्र मोक्षसाधननियमे ज्ञातव्य । एतादृशनियमे महाव्रतत्व पूर्वोक्तमनुपञ्जनीयम् । कण्ठरवेणानुक्तिस्तु क्रियायोग तद्भावज्ञापनाय । तस्य प्रतिनियतदेशकालाद्यनवच्छिन्नतया सार्वभौमत्वासम्भवात् । अत एवास्यैवानावश्यकत्वमुक्त श्रीभागवतादौ । यमानभीक्ष्ण सेवेत नियमान्मत्पर क्वचिदिति । मत्पर इत्यनेन तु भक्तियोगज्ञानयोगादीनां सार्वभौमत्वेन महाव्रतत्वादावश्यकत्वमेवेति ज्ञापितम् । तदुक्त विष्णुपुराणेऽपि—

शय्यासनस्थोऽपि पथि व्रजन् वा स्वस्थ परिक्षीणवितर्कजाल ।
ससारबीजक्षयमीक्षमाण स्यान्नित्यमुक्तोऽमृतभोगभागी, इति ॥

स्वस्थ स्वस्मिन् साक्षिणि यत् पूर्णानन्दैकबोधस्तद् ब्रह्मैवाहमस्मीति बाधेन तत्प्रतीति परमात्मनिष्ठ । परिक्षीणवितर्कजाल । वक्ष्यमाणो वितर्कजाल प्रतिपक्षभावना विनापि ब्रह्मात्मप्रणिधानेन च क्षीणो यस्य । तथा ससारबीजक्षयमीक्षमाण ससारबीजानां मिथ्याज्ञानजन्यवासनाना क्षयमनुदिनमुपलभमान । तथा अमृतभोगभागीति जीवन्मुक्तिसुखानुभवितेत्येतद्रूपा नित्यमुक्त स्यादित्यर्थ ॥ ३२ ॥

एतेषु यमनियमेषु सम्भावितानां वक्ष्यमाणविघ्नानां निवृत्त्युपायमाह—

## वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

वितर्क्यन्त मिथ्याज्ञानजन्यधारादिवासनाभिरभिमुखीक्रियन्ते इति वितर्का हिंसादिसकलपातैरनिष्टसाधनत्वाद्धर्मानिष्याश्चैव, कार्यावशेषमनृतमपि वदिष्यामि, अर्थावशाघात परस्वमप्यपहरिष्यामि, सुखावशपात् स्त्रियमुपयास्यामि, भागनिशपायघटभोग साधन प्रदीप्यामीत्यादिभयमादीना बाधने प्रतिबन्धे प्राप्त यमादि-

परो मुमुक्षुः प्रतिपक्षभावनं विपक्षभावनं हिंसादयोऽज्ञानमूलत्वात् संसारहेतवः । संसारश्च दुःखबहुलः । तथाहि । गर्भवासदुःखं सर्वनिरयतुल्यम् । ततो निःसृतस्य बाल्ये पारतन्त्र्यप्रतीकारादिनिबन्धनं, यौवने चार्थार्जनकामसमात्सर्यादिनिबन्धनं, वार्द्धके च स्त्रीयानां स्वतन्त्रतया रोगबाहुल्येनेन्द्रियाद्यपाटवेन च कृतं दुःखं, मरणं च महद् दुःखम् । एवं कथञ्चित् सत्कर्मजन्यस्वर्गादावपि परोत्कर्षस्वर्गक्षयादिचिन्ताजन्यं दुःखमापतेदित्येवं दोषचिन्तनं सदा कुर्यादित्यर्थः । एवमसत्कर्मजन्येषु कुम्भीपाकादिनरकेषु श्रवणतु सह महदेव दुःखम् । ततस्तिर्यगादियोनिषु दुःखैकतानेषु सुखलेशो दुर्लभ इति दुःखबहुलः संसारो जिहासितः । तद्धानाय च मया हिंसादिबहुलान् धर्मान् विहाय योगः शरणीकृतः । यदि पुनस्ताननुसरामि तदा पुनरादानाद्वान्ताशिश्वतुल्यता स्यात् । अनिवारणीयं संसारदुःखं चापतेदित्येव दोषचिन्तनं सदा कुर्यादित्यर्थः । इत्थमनुदिनं वितर्केषु दोषं भावयतो वितर्कजालनिवृत्त्या समाधिलाभेनापरोक्षज्ञानाद्भवत्येव मुक्तिरितिभावः ॥ ३३ ॥

इदानीं क्रमेण वितर्काणां स्वरूपं भेदं प्रकारं कारणं फलं तेषु प्रतिपक्षभावनं चाह—

वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

हिंसादय इति स्वरूपम् । कृतकारितानुमोदिता इति भेदः । स्वयं निष्पादिताः कृताः । कुर्वित्याज्ञया समुत्पादिताः कारिताः । अन्यैः क्रियमाणाः सम्यगित्यङ्गीकृता अनुमोदिताः । एतत्त्रैविध्यं, मन्दमतेनं मया हिंसा कृताऽतो नास्ति मे दोष इति कारितादौ दोषाभावभ्रमनिरासायेति दिक् ॥ लोभक्रोधमोहपूर्वका इति कारणम् । यद्यपि कामपूर्वका इत्यपि वक्तु युक्तं, तथापि कामस्य क्रोधलोभयोरेव हिंसादिकं प्रति कारणत्वेनान्यथासिद्धत्वं तथा कामेति मन्तव्यम् । लोभः धर्ममांसादिविषयिणी तृष्णा । क्रोधः कृत्याकृत्यविवेकोन्मूलकोऽन्तःपरज्वलनात्मकश्चित्तधर्मः । मोहः पुनः

भविष्यतीत्येवं विपर्ययः । एतैः कृताः कारिता अनुमोदिताश्च प्रत्येकं त्रिप्रकारा भवन्तीति नवप्रकारास्तेऽपि पुनः प्रत्येकं त्रिविधा इत्याह ॥ मृदुमध्याधिमात्रा इति ॥ मृदवो मन्दाः, मध्या अतपव्यवधानाः, अधिमात्रा अतितीव्राः । इत्थं सप्तविंशतिप्रकारा भवन्ति । मृदुमध्याधिमात्रा अपि पुनस्त्रेधा भवन्ति । मृदुमृदवः, मृदुमध्याः, मृदुतीव्राः । मध्यमृदव., मध्यमध्याः, मध्यतीव्रा., तीव्रमृदवः, तीव्रमध्या', तीव्रतीव्राश्चेत्येकाशीतिप्रकारा भवन्ति । ते पुनर्नियमविकल्पसमुच्चयादिभेदात् प्राणभृद्भेदाच्चासङ्ख्येया भवन्ति ॥ दुःखाज्ञानानन्तफला इति। फलं दु.ख, प्राणिमात्रस्य प्रतिकूलवेदनीयश्चित्तधर्म. । अज्ञान पञ्चपर्वाऽविद्या । दु खाज्ञान अनन्तमपरिच्छिन्नं फलं येषां ते तथोक्ताः।तथा हिंसकस्तावद् बन्धनादिना जीवस्य वीर्यमपाकरोति । ततश्च शस्त्रादिनिपातेनात्यन्त दु खयति । ततो जीवितादपि मोचयति । ततः परस्य वीर्यनाशाद्स्य हिंसकस्यापि कालान्तरे तथैव वीर्यक्षया भवति।ततो दु.खोत्पत्तिस्ततो मरणानन्तर महानरकतिर्यक्प्रेतादियोनिष्वज्ञानबहुलेषु प्रवेशो यथाकर्म भवति । किं बहुना । नाकस्य पृष्ठे सुकृतेऽनुभूत्वेमं लोक हीनतर विशन्तीति श्रुत्या त्रयीधर्मवतामपि हीनतरे लोक प्रतिपाद्यते । मनुना चोक्तं, मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम * एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिण इति हिंसायाश्चैतत्वेनाशुद्धिमभिप्रेत्यैव । व्यक्तीभविष्यति इदमुपरिष्टात् । इत्थम्भावनमेव तपु प्रतिपक्षभावनमित्याह ॥ प्रतिपक्षेति ॥ ३४ ॥

एवमहिंसापरस्य योगिनस्तत्फलभूत सिद्धियोगं दर्शयति—

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥

उक्तप्रतिपक्षभावनेनाहिंसास्थैर्ये सति तत्सन्निधौ अहिंसां भावयत. समीपे वैरत्याग सहजविरोधिनामहिनकुलादीनामपि निर्मत्सरतयाऽवस्थितिर्भवतीत्यर्थ ॥ ३५ ॥

सत्यपरस्याह—

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

सत्यभावनप्रकर्षस्थैर्ये सति क्रियाफलाश्रयत्व शब्दोच्चारणरूप-

क्रियाया उद्देश्यफलस्य आश्रयत्वम् । क्रियाऽत्र धर्माधर्मरूपा । फलं सुखदुःखे क्रियाफले आश्रयतीति तथा । तस्य भावस्तत्त्वम् । क्रियाफलं स्वेच्छया जनयतीत्यर्थः । यथा, धार्मिको भव स्वर्गी भवेत्युक्ते तथा भवति । अमोघाऽस्य वाग् भवति । सत्यत वाचः शुद्ध्या मन्त्रादिजपस्य पूर्णत्वादिति भावः । सत्यस्य महाफलत्वम्, अनृतस्य च निन्दितफलत्वं श्रुत स्मृतिपुराणवेदेषु । सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् * सत्येन लभ्यते ह्यात्मा मुच्यते चापि किल्बिषात् ॥ समूलो वा एष परिशुष्यति योऽनृतमभिवदतीत्यादिना ॥३६ ॥

अस्तेयपरस्याह—

## अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥

अस्तेयस्थैर्ये सति सर्वदिक्कालगतानां रत्नानामुपस्थानं सान्निध्यं भवतीत्यर्थः। अशास्त्रीये निरभिलाषत्वाद् अयमस्तेयाभ्यासधर्मबलात् सर्वदा सर्वत्र सर्वरत्नानि प्राप्नोतीति यावत् ॥ ३७ ॥

ब्रह्मचर्यपरस्याह—

## ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः ॥ ३८ ॥

ब्रह्मचर्य्ये सिद्धे सति वीर्य्यलाभः । वीर्य्यस्य निरतिशयसामर्थ्यस्य लाभो भवतीत्यर्थः । वीर्य्यनिरोधे चेतनाशक्तेरबहिर्भावेन अकुण्ठीभावाच्छरीरेन्द्रियमनःसु सामर्थ्यप्रकर्षमायाति । दृश्यते ह्यूर्ध्वरेतस्कानां तेजोविशेष । तस्मात्तेषु ब्रह्मचर्य्यमत्यावश्यकमिति भाव । अत एव छान्दोग्ये, य एवैनं ब्रह्मलोकं ब्रह्मचर्य्येणानुविन्दति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु कामचारो भवतीत्यादिना ब्रह्मचर्य्यवतामेव ब्रह्मप्राप्ति सर्वत्राप्रतिहतगतिं यज्ञादिधर्माणां सर्वेषां ब्रह्मचर्यान्तर्भावेन यज्ञादिफलावाप्तिं च प्रतिपादयन्त्या श्रुत्या ब्रह्मचर्य्यस्यैव परमोत्कर्षः प्रतिपादितः ॥ ३८ ॥

अपरिग्रहपरस्याह—

## अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

अपरिग्रहस्थैर्ये शरीरान्तपदार्थस्य परिग्रहाभावदार्ढ्ये सति, जन्मकथन्तासम्बोधः ॥ कथमित्यस्य भाव कथन्ता । जन्मन कथन्ता

जन्मकथंता।तस्याः सम्बोध. सम्यग्ज्ञानं, जन्मान्तरे कोऽहमासं कथमासम्, किं कार्यमकारि, कं वा भविष्याम इति जिज्ञासायां भवतीत्यर्थः। दु:खबहुलपूर्वापरजन्मज्ञानेन वैराग्यद्वारा दृढमात्मज्ञानं भवति। तेनायमपरिग्रहोऽप्यावश्यक इति भावः॥ ३९॥

उक्ता यमसिद्धयोऽथ नियमसाध्येषु सिद्धियोगेषु प्रथमं बाह्यशौचसिद्धिमाह—

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः॥ ४०॥

शौचं भावयतः पुरुषस्य शौचे निमित्तभूतामशुद्धिं कायादिषु पश्यतो भवति जुगुप्सा घृणा। अशुचिरयं कायः, सर्वथा नात्राहङ्कार कर्त्तव्य इत्यमुनैव हेतुना परैश्च कायवद्भिः स्त्र्यादिभिरसंसर्ग. असम्बन्धो भवतीत्यर्थः॥ ४०॥

आन्तरशौचस्य फलमाह—

## सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च॥ ४१॥

भवन्तीति शेषः। आन्तरशौचादित्यनुवर्त्तते। मैत्र्यादिभावनारूपाऽप्यन्तरशौचात् सत्त्वस्य मनसः शुद्धिर्नैर्मल्यम्। ततः सौमनस्यम्। प्रसाद. । तत. ऐकाग्र्यम्। एकस्मिन् विषये परमात्मनि स्थिरता। तत इन्द्रियजयो विषयेभ्यः पराङ्मुखता। तत आत्मदर्शनयोग्यत्वं सामर्थ्यमित्येवंक्रमेण सत्त्वशुद्ध्यादय. शौचाभ्यासवतो भवन्तीत्यर्थः॥ ४१॥

सन्तोषाभ्याससाध्यसिद्धिमाह—

## सन्तोषादनुत्तमः सुखलाभः॥ ४२॥

यदृच्छालाभेनैव तुष्टिरूपात् सन्तोषान्निवृत्ततृष्णस्य पुरुषस्यानुत्तम नास्ति उत्तमो यस्मादित्यनुत्तमो विषयसुखेनानुपमेयसुखलाभ सुखस्य प्राप्तिर्भवतीत्यर्थः। तदुक्तं, यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्, * तृष्णाक्षयसुखस्यैते कलां नार्हन्ति षोडशीमिति॥ ४२॥

तपःसाध्यां सिद्धिमाह—

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

तपसः तपोऽभ्यासात्, अशुद्धिक्षयात् यथेष्टगत्यादिप्रतिबन्धकपापमलादेर्नाशात्, कायेन्द्रियसिद्धिः कायेन्द्रियाणाम् अल्पत्वमहत्त्वदूरार्थदर्शित्वादिसामर्थ्यरूपा सिद्धिर्भवतीत्यर्थः । कायस्यातिलाघवेन दूरदेशगमनादिकं धर्मविशेषायत्तं महत्त्वेनाग्न्यैरव्याप्यत्वादि च भवति । इन्द्रियाणां दूरार्थसूक्ष्मार्थव्यवहितानेकार्थप्राहिता भवतीति यावत् । एतेन, परमाणुपरममहत्त्वान्तोऽस्य वशीकार इति सूत्रेणोक्तसिद्धियोगस्याप्यान्तर्भावो ज्ञातव्यः । हठयोगादिफलत्वं स्वेतस्य नान्तरीयकतयेति भावः । एताश्च सिद्धयो यद्यपि औषधादिभिरपि सम्भवन्ति । वक्ष्यति च सूत्रकारश्चतुर्थचरणे-जन्मौषधितपःसमाधिजाः सिद्धय इति, तथाप्यौषधादिकमपि निष्पापस्यैव फलति । पापनिवृत्तौ च मुख्यो हेतुस्तप एव भवति । तथैव पुराणादिषु श्रवणात् । अतोऽत्र तपःफलत्वेनैवोक्ता इति भावः । अत्र समाधिफलत्वं स्वेतासां नान्तरीयकतया मन्तव्यमिति सङ्क्षेपः ॥४३॥

स्वाध्यायाभ्याससाध्यां सिद्धिमाह—

स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥

वेदान्तोपनिषदाद्यावृत्तिरूपात् सगुणमन्त्रजपस्तोत्रपाठादिरूपाच्च स्वाध्यायादिष्टदेवतासम्प्रयोगः दर्शनप्रतिबन्धकदुरितनिवृत्त्यादिना साक्षात्कारो भवतीत्यर्थः । सम्भाषणानुग्रहादीनि च भाष्ये कण्ठरवेणोक्तानि । देवता ऋषयः साध्याश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्ये चास्य वर्तन्त इति दिक् । देवतेत्युपलक्षणम् । इष्टानामभिमतानां देवानाम् ऋषीणां सिद्धानां यक्षाणां गन्धर्वाणामेवमन्येषां महानुभावानां सम्प्रयोगो दर्शनं भवति । तेभ्यः स्वान् पुनातीत्यर्थः । ते दर्शनप्रतिबन्धकपापनिवृत्त्या दर्शनमायान्ति, कार्ये चानुकूला भवन्तीत्यर्थः ॥ ४४ ॥

ईश्वरप्रणिधानसाध्यसिद्धिमाह—

समाधिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरप्रणिधानं पूर्वं व्याख्यातम् । समाधेरुक्तलक्षणस्य सिद्धिरप्रतिबन्धेनानायासेन तत्कृपया गुर्वादिद्वारा च दृढा प्राप्तिर्भवतीत्यर्थः। एतच्च फलं प्रेमभक्तेः स्वतः पुरुषार्थरूपाया नान्तरीयकम् यथा फलार्थिनो वृक्षादिसान्निध्ये छायायां गन्धादिरित्यन्यत्र विस्तरः ॥४५॥
इतः परं सकलरोगादिनिवृत्तिद्वारा हठयोगस्योपायमासनमाह—

## स्थिरसुखमासनम् ॥ ४६ ॥

स्थिरं निश्चलं सुखकरं च यत्तदासनम् । आस्यते आस्ते वाऽनेन प्रकारेणेत्यासनमित्यर्थः। तच्च, पद्म १ सिद्ध २ भद्र ३ वीर ४ स्वस्तिक ५ सिंह ६ दण्ड ७ सोपाश्रय ८ पर्यङ्क ९ मयूर १० कुक्कुटोत्तानकुक्कुट ११—१२ पश्चिमतान १३ मत्स्येन्द्रपीठ १४ चक्र १५ गोमुख १६ कूर्म १७ धनुर्मृगस्वस्तिका—ऽर्धचन्द्रा—ऽञ्जलिक १८—१९—२०—२१ पीठ २२ वज्र २३ मुक्त २४ चन्द्रा-ऽर्धप्रसारित २५—२६ शव २७ कपाल २८ गरुडा—ऽद्धासन २९—३० कमल ३१ क्रौञ्चनिषदन ३२ हस्तिनिषदनोष्ट्रनिषदन ३३—३४ कपिनिषदन ३५ योगासन ३६ योन्यासन ३७ समस्थाना ३८ ऽऽदिभेदेन चतुराशीतिप्रकारम्। एतेषां लक्षणानि योगप्रदीपादावुक्तानि। तत्र पद्मासनस्य—

अङ्गुष्ठौ सन्निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण च ।
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे ॥
पद्मासनं भवेदेतत् सर्वेषामेव पूजितम् ।
उत्तानौ चरणौ कृत्वा ऊरुसंस्थौ प्रयत्नतः ॥
ऊरुमध्ये तथोत्तानौ पाणी कृत्वा समौ दृशौ ।
नासाग्रे विन्यसेद्राजन् दन्तमूलं तु जिह्वया ॥
उत्तम्भ्य चिबुकं वक्षस्युत्थाप्य पवनं शनैरिति वा ॥ ॥ १ ॥

अथ सिद्धासनस्य—

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे
न्मेढ्रे पादमथैकमेकहृदयः कृत्वा समं विग्रहम् ॥
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद् भ्रुवोरन्तरं
ह्येतन्मोक्षकपाटभेदनकरं सिद्धासनं प्रोच्यते ॥
दक्षिणोत्तरगुल्फेन सीविनीं पीडयेच्छिराम् ।
अधस्तादण्डया सूक्ष्मां सव्योपरि च दक्षिणाम् ॥

जङ्घोर्वोरन्तरं गार्गि मध्यस्थं बन्धयेद् दृढम् ।
समग्रीवशिरस्कन्धः समपृष्ठसहोदरः ॥
नेत्राभ्यां दक्षिणं गुल्फं लोकयन्नुपरि स्थितम् ।
एतत् सिद्धासनं नाम श्रीमत्सिद्धिविधायकमिति वा ॥
एतदेव, योगाऽऽसनपदेनोच्यते श्रुतिषु । अनायासेन योग-साधनत्वात् ॥ ॥ २ ॥

अथ भद्रस्य—
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ॥
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम् ॥ ॥ ३ ॥

अथ वीरासनस्य—
एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितः ।
इतरस्मिँस्तथा चोरुं वीरासनमुदाहृतम् ॥ ॥ ४ ॥

अथ स्वस्तिकस्य—
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः सुखासीनं स्वस्तिकं तत् प्रचक्षते ॥
सीवन्या आत्मनः पार्श्वे गुल्फौ निक्षिप्य पादयोः ।
सव्ये दक्षिणगुल्फं तु दक्षिणे दक्षिणोत्तरम् ॥
एतत् स्वस्तिकमाख्यातं सर्वपापप्रणाशनमिति, च ॥ ॥ ५ ॥

अथ सिंहासनस्य—
गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
दक्षिणं सव्यगुल्फेन दक्षिणेन तथोत्तरम् ॥
हस्तौ जानूपरि स्थाप्य स्वाङ्गुलीः सम्प्रसार्य च ।
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ॥
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ॥ ॥ ६ ॥

अथ दण्डासनस्य—
सुखप्रसारितौ पादौ सुश्लिष्टौ भुवि संस्थितौ ।
उपवेश्यार्द्धकायं तु दण्डासनमिति स्मृतम् ॥ ॥ ७ ॥

अथ सोपाश्रयस्य—
पादौ द्वौ द्विगुणीकृत्य तिर्यगूर्ध्वं यथाक्रमम् ।
न्यसेत् पाणी योगपट्टे स्थित्वा श्लिष्टाङ्गुली यथा ॥

योगपट्टासनं ह्येतत् सर्वेषामपि पूजितम् ॥ ॥ ८ ॥

अथ पर्य्यङ्कस्य—

जानुप्रसारितं बाह्वोः शयनं पृष्ठयोगतः ॥

केचित्तु—

पर्य्यङ्कं योगपट्टेन बध्नीयात् पृष्ठयोगतः ।

आकुञ्च्य जानुनी सम्यक् पादं कृत्वा तु दक्षिणम् ॥

बाह्यतो वामजङ्घायां वामसव्यादधो बहिः ।

किञ्चिद्विनिर्गतं कृत्वा सन्तिष्ठेत्साम्य वै कटिम् ॥

पर्य्यङ्कमिति व्याख्यातमासनं योगसिद्धिदम्, इति स्मृतेः ।

पर्य्यङ्कासनं योगपट्टासनं चैकमेवेति वदन्ति ॥ ॥ ९ ॥

अथ मयूरस्य—

अवष्टभ्य धरां सम्यक् तलाभ्यां करयोर्द्वयोः ।

हस्तयोः कूर्परे चापि स्थापयेन्नाभिपार्श्वयोः ॥

समुन्नतशिरःपादो दण्डवद् व्योम्नि संस्थितः ।

मयूरासनमेतद्धि सर्वपापप्रणाशनम् ॥

सर्वे चाभ्यन्तरा रोगा विनश्यन्ति विषाणि च ॥ ॥ १० ॥

अथ कुक्कुटस्य—

पद्मासनं तु संयोज्य जान्वोरन्तरे करौ ।

निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् ॥ ॥ ११ ॥

अथोत्तानकुक्कुटस्य—

कुक्कुटासनबन्धस्थो दोर्भ्यां सम्बद्ध्य कन्धराम् ।

भवेत् कूर्म्मवदुत्तानमेतदुत्तानकुक्कुटम् ॥

उत्तानकूर्म्मकमिति केचित् ॥ ॥ १२ ॥

अथ पश्चिमतानस्य—

प्रसार्य पादौ भुवि दण्डरूपौ दोर्भ्याञ्च पादद्वितयं गृहीत्वा ।

जानूपरिन्यस्तललाटदेशोऽभ्यसेदिदं पश्चिमतानमाहुः ॥

उदय जठरानलस्य कुर्य्यादुदरे कार्श्यमरोगितां च पुंसाम् ॥ ॥ १३ ॥

अथ मत्स्येन्द्रपीठस्य—

वामोरुमूलार्पितदक्षपादं जान्वोर्बहिर्वेष्टितदक्षदोष्णा ।

प्रगृह्य तिष्ठेत परिवर्त्तिताङ्गः श्रीमत्स्यनाथोदितमासनं स्यात् ॥

मत्स्येन्द्रपीठं जठरप्रदीप्तिं प्रचण्डरुङ्मण्डलखण्डनास्त्रम् ।

अभ्यासतः कुण्डलीनीप्रबोधं दण्डे स्थिरत्वं प्रददाति पुंसाम् ॥ ॥१४॥

अथ चक्रासनस्य—

शवासनस्थौ द्वौ पादौ कुर्याम्मस्तकतः परौ ।
व्युत्क्रमेण ततः शीघ्रमेतत् सर्वस्य साधनम् ॥
चक्रासनं गुल्मप्लीहवातरोगादिनाशनम् ॥ ॥ १५ ॥

अथ गोमुखस्य—

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ॥
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ ॥ १६ ॥

अथ कूर्मस्य—

गुदं नियम्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ॥
कूर्मासनं भवेदेतदिति योगविदो विदुः ॥ ॥ १७ ॥

अथ धनुषः—

पादाङ्गुष्ठौ च पाणिभ्यां गृहीत्वा श्रवणावधि ॥
धनुराकर्षणं कृत्वा धनुरासनमीरितम्, इति ॥ ॥ १८ ॥

अथ मृगस्वस्तिकस्य—

स्थातव्ये भूतले पादावासनस्थेन योगिना ।
दक्षिणं वामभागे तु वामपादं तु दक्षिणे ॥
अन्योन्याभिमुखं कृत्वा मृगशीर्षकरद्वयम् ।
योगससिद्धिहेतुस्तु मृगस्वस्तिकमुच्यते ॥ ॥ १९ ॥

अथार्धचन्द्रस्य—

तलपादेन वामेन जानुना दक्षिणेन च ॥
स्थित्वा हस्तपुटं कार्यमर्धचन्द्रासनं विदुः ॥ ॥ २० ॥

अथाञ्जलिकस्य—

भुवि स्थित्वा तु जानुभ्यां तावन्मात्रेण योगिना ॥
हृदि हस्तपुटं कार्यं ज्ञेयमञ्जलिकासनम् ॥ ॥ २१ ॥

अथ पीठासनस्य—

आसनस्थेन पादौ द्वौ न्यस्य तौ भूतले समौ ॥
जानुद्वये हस्ततलं कृत्वा पीठासनं भवेत् ॥ ॥ २२ ॥

अथ वज्रस्य—

सव्येन गुल्फेन गुदं निपीड्य सव्येतरेणैव निधाय सन्धिम् ।
सव्ये करे न्यस्तकरेतरस्मिन् शिर्षां समालोकय पावकस्य ॥

एतद्ब्रजासनं प्राहुर्गुप्तासनमथो विदुः ॥ ॥ २३ ॥

अथ मुक्तस्य—

मेढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि ॥

गुल्फान्तरं तु विन्यस्य मुक्तासनमिदं भवेत् ॥

एतद्द्वयं सिद्धासनस्यैवाऽन्तरभेदः ॥ ॥ २४ ॥

अथ चन्द्रार्द्धस्य—

तद्वत्पादद्वयं कृत्वा तुलनान्योन्यसंस्थितम्।

चन्द्रार्द्धमेवं कथितं योगसाधनमुत्तमम् ॥

तद्वत् पद्मासनवत् द्विगुणपादद्वयं कृत्वेत्यर्थः ॥ ॥ २५ ॥

अथ प्रसारितस्य—

तद्वत् पादद्वयं कुर्यात्सम्मुखं तु प्रणामितम्।

पृष्ठतोऽप्युपधानस्थं सम्प्रसार्य करद्वयम् ॥

प्रसारितासनं ह्येतत् कथितं योगसिद्धिदम्।

अत्रापि तद्वत् पद्मासनवदित्यर्थः ॥ ॥ २६ ॥

अथ शवस्य—

उत्तानं शववद् भूमौ शवासनमिदं स्मृतम् ॥

शवासनं श्रान्तिहरं चित्तविश्रान्तिसाधनम् ॥ ॥ २७ ॥

अथ कपालासनस्य—

भूमौ स्वमस्तकं स्थाप्य हस्तयोः कूर्परे तथा ॥

पादौ खे दण्डवत् कुर्यात् कपालासनमीरितम् ॥ ॥ २८ ॥

अथ गरुडासनस्य—

गरुडस्येवावस्थितिः ॥ ॥ २९ ॥

अथार्द्धासनस्य—

एकपादमथैकस्मिन् विन्यस्योरुणि सत्तम ॥

आसीतार्द्धासनमिदं योगसाधनमुत्तमम् ॥ ॥ ३० ॥

अथ कमलासनस्य—

दक्षिणोरुगतं वामपादं वामोरुसंस्थितम्।

दक्षिणं तु समाकृष्य नज्जङ्घे तु परस्परम् ॥

एतद्धि कमलं नाम विशेरासनमुत्तमम् ॥

अत एव पद्मासनाद् भेदः। कराङ्गुष्ठग्रहणाभावात् ॥ ॥ ३१ ॥

अथ क्रौञ्चनिषदनं— क्रौञ्चस्येवावस्थितिः ॥ ॥ ३२ ॥

एवं हस्तिनिषदनादीनि हस्त्यादीनां निषण्णाना संस्थानदर्शनात् प्रत्येतव्यानि, सम्प्रदायाच्चावगन्तव्यानि। प्रचरद्ग्रन्थेषु ग्रन्थेषु तेषामनुपलब्धः ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥

अथ योगासनस्य—

दक्षजानोः सव्यगुल्फं सव्ये दक्षिणमेव च ।
कृत्वा समोपविष्टस्य ऽऽमध्याद् हृग्रिरुच्यते ॥
वैपरीत्येन वा योगाद् योगसाधनमुत्तमम् ।
योगासनमिदं प्रोक्तं सर्वयोगिनिषेवितम् ॥ ॥ ३६ ॥

अथ योन्यासनस्य—

गुह्यस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेत् ।
सीवन्यामथ पादमेकहृदयः कृत्वा समं विग्रहम् ॥
जानुन्यस्तकराग्रदृष्टिरचलः स्याद् योनिमुद्रान्वितः ।
इदमपि सिद्धासनस्यैवाऽवान्तरभेदः ॥ ॥ ३७ ॥

अथ समसंस्थानस्य—

पादाग्रप्रपदाभ्यां द्वयोराकुञ्चितयोरन्योन्यसंपीडनम् ॥ ॥ ३८ ॥ ॥

एव येन सस्थानविशेषेणावस्थितस्य स्थैर्यं सुखं च सिद्ध्यति तदासनं स्थिरसुखम्। तेषु सर्वेषु, सिद्धं पद्म भद्र स्वस्तिकं चेति चतुष्टयं सारभूतमुक्तममृतबिन्दूपनिषदि—

सिद्धं पद्मं स्वस्तिकं वा भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यगुत्तराभिमुख स्थितः, इति ॥

पद्मासनद्वयोर्हीतिति कुम्भकसाधकत्वाद् भद्रस्य च उदरलाघवद्वारा व्याधिनाशकत्वात् सिद्धस्याधिभौतिकोपद्रवनिवारकत्वात्। अत एव हठप्रदीपिकायान्तु स्वस्तिकं विहाय सिद्धासनमादाय चतुष्टयमुक्तम्। यथा—

चतुराशीत्यासनानि शिवेन कथितानि वै ।
तेभ्यश्चतुष्कमादाय सारभूतं ब्रवीम्यहम् ॥
सिद्धं पद्मं तथा भद्रं सिंहं चेति चतुष्टयम् इति ।
एतेष्वपि सिद्धं पद्मं चेति द्वयं श्रेष्ठम् ॥

तदुक्तं गोरक्षेण—

आसनेभ्यः समस्तेभ्यो द्वयमेतदुदाहृतम् ।
एकं सिद्धासनं प्रोक्तं द्वितीयं पद्मासनम्, इति संक्षेप ॥४६॥

आसनस्थैर्यस्योपायमाह—

**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥**

प्रयत्नः स्वाभाविकः शरीरधारकश्चलत्वाद् याद्दच्छिकासन-हेतुतयोपदेष्टव्ययोगाङ्गासनविघातकस्तस्य शैथिल्यम् उपरमस्तेन । तथा अनन्ते पृथिवीधारिणि स्थिरतरे शेषनागे समापत्त्या धारणया चित्तस्य तदात्मतापत्तिरूपापत्त्या चासनं स्थिरं भवतीत्यर्थः । यत्नश्चानन्तसमापत्तितोऽदृष्टविशेषवशाद्भावनापरिपाकेन तदानन्त्याऽनुग्रहाद्भवत्यन्यदेतत् ॥ ४७ ॥

आसनजयसाध्यां सिद्धिमाह—

**ततो द्वन्द्वानभिघातः ॥ ४८ ॥**

ततः आसनजयाद् द्वन्द्वाऽनभिघातः ॥ द्वन्द्वैः शीतोष्णादिभि-रपीडनं भवतीत्यर्थः ॥ ४८ ॥

आसनसाध्यप्राणायामाख्ययोगाङ्गस्य लक्षणमाह—

**तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥**

तस्मिन् सति आसनस्थैर्ये सति श्वासप्रश्वासयोः बाह्यवायो-राचमनं श्वासः कौष्ठ्यस्य वायोर्निःसारणं प्रश्वासस्तयोर्गतिविच्छे-दः शास्त्रोक्तरीत्या स्वाभाविकगतेः प्रतिरोधः प्राणायामसंज्ञको योग इत्यर्थः । स चायं रेचकपूरककुम्भकेष्वनुगत इति वक्ष्यमाणप्राणा-यामसामान्यलक्षणमेतत् । तथाहि । यत्र बाह्यो वायुराचम्यान्तर्धा-र्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः । यत्रापि कौष्ठ्यो वायुर्विरेच्य बहिर्धार्यते रेचके तत्राप्यस्ति द्वयोर्गतिप्रतिषेधः । एवं कुम्भकेऽप्युभयाभावः सुतराम् । अत, प्राणायामस्त्रिधा प्रोक्तः पूर-कुम्भकरेचकैरिति स्मृतश्च त्रयाणां प्रत्येकं प्राणायामत्वं, न मिलि-तानामेव । क्वचित्तन्त्रादौ मिलितानामेकप्राणायामत्वोक्तिस्तु प्रथम-भूमिकायां कस्मिँश्चित् सदाऽनुष्ठाननियमाऽभिप्रायेणेत्यनुपदमेव स्फुटीभावयिष्यति ॥ ४९ ॥

सामान्यलक्षणमुक्त्वा लक्ष्यं प्राणायामत्रयं विभजते—

बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः
परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥

स तु प्राणायामो बाह्यवृत्तिः रेचकः। आभ्यन्तरवृत्तिः पूरकः स्तम्भवृत्तिः। स्तभ्यते पूरितकुम्भवन्निश्चलतया विधारकप्रयत्नेन अन्तर्बहिरेव वाऽवस्थाप्यते इति कुम्भकः। इत्थं रेचकपूरककुम्भकभेदात् त्रिविधः। सोऽयं त्रिविधः प्राणायामो देशकालसंख्याभिः परिदृष्टो निर्णीतो नासाद्वादशान्तादिदेशेन षट्त्रिंशन्मात्रादिकालेन एतावद्वारं कृतमिति संख्यया च नियमित इति यावत्। एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातो भवतीत्येतज्ज्ञापनाय संख्याग्रहणम्। उद्घातश्च नाभिमूलात् प्रेरितस्य शिरस्यभिहननम्। स एवायं दिवसपक्षमासादिक्रमेणाभ्यस्तो दीर्घदेशकालव्यापितयैव दीर्घो दुर्लक्ष्यगततया च सूक्ष्मो दीर्घसूक्ष्मसंज्ञको भवतीत्यर्थः॥

अत्र, षट्त्रिंशदङ्गुलं हंसः प्रयाणं कुरुते बहिः * सव्यापसव्यमार्गेण तेन प्राणोऽभिधीयते * प्राणो देहगतो वायुरायामस्तन्निबन्धनमिति स्मृतेः, प्राणस्यायामः प्राणायाम इति योगादरेण रेचकपूरककुम्भकानां त्रयाणामपि विभक्तयोक्तिः।

तत्र रेचकस्य लक्षणं स्कान्दे—

नासापुटमङ्गुल्या पीडयित्वा परेण तु।
उदराद्रेचयेद्वायुं रेचनाद्रेचकः स्मृतः, इति॥ उदराद्रेचनं शनैः शनैर्धारया निःसारणम्॥

बहिर्यद्रेचनं वायोरुदराद्रेचकः शनैः।
भानुदैवतयाऽजस्रं चान्द्रदैवतयाऽथवा, इति स्मृतेः॥

अथ पूरकस्य—

बाह्ये स्थितं नासपुटेन वायुमाकृष्य तेनैव शनैः समन्तात्।
नाडीश्च सर्वाः परिपूरयेद्यः स पूरको नाम महानिरोधः,इति॥

अत एव—

पूरणात् पूरकः प्रोक्त इति योगोऽत्र देवले।
पूरणं हृदिवत् प्रोक्तं देहे सर्वत्र योगिभिः॥

तत्र कुम्भकस्तुद्विधः— सहितः, केवलश्च । तत्र सहितकुम्भकस्य—

न मुञ्चति न गृह्णाति वायुमन्तर्बहिःस्थितम् ।
आपूर्य कुम्भवत्तिष्ठेद् केवलः स तु कुम्भक ॥
आरेच्यापूर्य यत् कुर्यात् स वै सहितकुम्भकः, इत्यादि ।

अयमेवानेन सूत्रेणोक्तः । देशकालसंख्याभिः परिदृष्ट इत्यनेन रेचकादिदेशादिपरिच्छिन्नत्वकथनात् । अतोऽयं रेचकपूरकाभ्यां सान्तरिता बाह्याभ्यन्तररूपेण रेचकपूरकदेशेन विपर्येणायुक्तोऽभ्यासबाहुल्यं विनैव जायमानसामान्य एवेति तृतीयस्यैतस्य अपरं रूपं केवलकुम्भकम् ॥ ५० ॥

प्राणायामस्य चतुर्थं विशेषमाह—

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

बाह्यं बाऽभ्यन्तरं च बाह्याभ्यन्तरे विषयो देशो ययोस्तथाभूतौ बाह्याभ्यन्तरवृत्ती पूर्वसूत्रोक्तौ रेचकपूरकौ तयोर्विषयपदस्वारस्यात् । तद्विषययोश्चाक्षेपी अतिक्रमी । तावतिक्रम्य त्यक्त्वा स्वयमेव वर्तते इति यावत् । एवम्भूतो यः प्राणायामः स चतुर्थ इत्यर्थः । अस्य च लक्षणं याज्ञवल्क्य आह—

रेचकं पूरकं त्यक्त्वा यत् सुखं वायुधारणम् ।

प्राणायामोऽयमित्युक्त स वै केवलकुम्भक, इत्यादि ॥ यद्यप्ययं तृतीयस्यैवावान्तरभेदस्तथापि देशकालाद्यवधारणकृतदीर्घसूक्ष्मत्वरूपस्य द्वितयसाधारणधर्मस्याभावाच्चतुर्थ इति पृथगुक्तः । ननु, केवलं सहितं वापि कुम्भकं नित्यमभ्यसत् * कुम्भके नित्ययुक्तस्य दुर्लभं न हि विद्यते इत्यादिना कुम्भकस्य नित्यमभ्यसनीयत्वोक्तेर्नित्याभ्यासकाले कालसंख्यादिपरिच्छिन्नत्वमस्याव्याहतम् । तत् कथं पृथगुक्तिरिति चेत् सत्यम् । यावद्वा शक्यते तावद्धारणं जपसंयुतम् * धारितं विसृजेत् पश्चात् प्राणं गत्या तु सूक्ष्मया * शनैः शनैरेव यत्नात् प्राणायामस्य सिद्धये इति वसिष्ठसंहितायां कालाद्यनवच्छिन्नतयैव मुख्याधिकारिणस्तदभ्यास उक्तः । यस्य तु केवलकुम्भके नास्त्येवाभ्यासस्तस्य तु सहिताभ्यास एवोक्तः । यावत् केवलयुक्तः स्यात् तावत् सहितमभ्यसेदिति । अतो देशकालादि-

विषयानपेक्षणात्तेभ्यो विलक्षणोऽयं पृथगेव भवतीति भावः । अस्यैव वक्ष्यमाणसहितभेदैः साध्यस्य फलविभवः पुराणेषु भगवच्च्यवनविश्वामित्रागस्त्यसंवर्त्तदुर्वासोजडभरतदत्तात्रेयप्रभृतीनां श्रूयते । यथा—

वाक्सिद्धिः, कामचारित्वं, दूरदृष्टिस्तथैव च ।
दूरश्रुतिः, सूक्ष्मदृष्टिः, परदेहप्रवेशनम् ॥
विण्मूत्रलेपने स्वर्णमदृश्यकरणं तथा ।
भवन्त्येतानि महतां खेचरत्वं तु योगिनाम् ॥
दुःखदोषक्षुधानिद्राजरामृत्युविवर्जनम् ।
सृष्टिसंहारकर्तृत्वमीश्वरेण समानता ॥
परचित्तप्रवेशेन ज्ञानशक्तिमहात्मना ।
सर्वज्ञता सर्वशक्तिः सर्वभूताद्यबाध्यतेति ॥

तृतीयपादोक्तसंयमफलमप्येतत्सिद्धावेव भवतीति ज्ञातव्यम् ।

एतदुत्पत्तिक्रममाह भाष्यकारः—

देशकालसंख्याभिर्बाह्यविषयपरिदृष्ट आक्षिप्तः । तथाऽभ्यन्तरपरिदृष्टविषय आक्षिप्तः । उभयथा दीर्घसूक्ष्मस्तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायाम इति ॥

अस्यार्थः । आदौ कथितदेशकालसंख्याभिर्बाह्यो रेचकः परिदृष्टोऽभ्यस्तः । पश्चाद्देशादिभिः सहैवाक्षिप्तोऽतिक्रामितो भवतीति शेषः । तथाऽभ्यन्तरविषय इति । आभ्यन्तरो विषयः पूरकोऽभ्यस्तः पश्चाद्देशादिभिः सहातिक्रामितो भवतीत्यर्थः । तथाक्षिप्तद्वयमुभयथा दीर्घसूक्ष्मो द्विविधो दीर्घसूक्ष्मश्चिरकालं देशादिभिरभ्यस्तौ रेचकपूरकाविति यावत् । तत्पूर्वकः तदुभयाक्षेपपूर्वकस्तदुभयमाक्षिप्येति यावत् । स्वेदकम्परोमाञ्चोत्थानरूपाणां भूमिकानां मृदुमध्यमोत्तमभेदेन तृतीयकुम्भकेषु यथाक्रमं जायमानानां जयाद् यथोक्तनियमपरिपालनेनाक्लिष्टबलाच्चाप्यमान पवनभूत उभयोः श्वासप्रश्वासयोर्गतिविच्छेदश्चतुर्थः प्राणायाम इत्यर्थः । एतत्र सहितकुम्भकाभ्यास एवास्याऽसाधारणम् । यदा नाडीविशुद्धिः स्याद्योगिनस्तत्त्वदर्शिनः । तदा विध्वस्तदोषस्य भवेत् केवलसम्भव इति स्मृतेरिति भावः । सहितस्य च सूर्यभेदनाद्यवान्तरभेदा हतमः । ते चोक्ता हठयोगे—

सूर्यभेदनमुज्जायी तथा सीत्कारशीतली ।

भस्त्रिकाभ्रामरीमूर्च्छासहितं चाष्ट कुम्भका इति ॥ सहितं वा उक्तप्रकारं सूर्यं सहितं चेत्यर्थः। अन्यथा पूरकरेचकान्वितत्वेन तेषामपि सहितावान्तरभेदत्वात् सहितं चेति विकल्पानुपपत्तिः। एतेषां लक्षणानि तत्रैवोक्तानि। तत्र सूर्यभेदनस्य यथा—

आसने सुखदे योगी बद्ध्वा चैवासनस्ततः।
दक्षनाडचा समाकृष्य बहिःस्थं पवनं शनैः॥
आकेशाग्रं नखाग्रं च शिरोऽग्रावधि कं ततः।
शनैः शनैः सव्यनाडचा रेचयेत् पवनं सुधीः॥
कपालशोधनं वातदोषघ्नं कृमिदोषहृत्।
पुनः पुनरिदं कुर्यात् सूर्यभेदनमुत्तमम्॥

अथोज्जायिनो यथा—

मुखं संयम्य नाडीभ्यामाकृष्य पवनं पुनः।
अन्तर्लगति हृत्कण्ठादृहृदयावधि सस्वनः॥
पूर्ववत् कुम्भयेत् प्राणं रेचयेदिडया ततः।
श्लेष्मदोषहरं कण्ठे जाठरानलवर्द्धनम्॥
उदरादिप्रदोषाणां विलापनमनुत्तमम्।
गच्छता तिष्ठता कार्यमुज्जाय्याख्यं च कुम्भकमिति॥

अथ सीत्कारस्य—

सीत्कां कुर्यात्तथा वक्त्रे घ्राणेनैव विसर्जयेत्।
एवमभ्यासयोगेन कामदेवो द्वितीयकः॥
योगिनीचक्रसंसेव्यः सृष्टिसंहारकारकः।
न क्षुधा न तृषा निद्रा तन्द्रालस्यं न जायते॥
भवेत् स्वच्छन्ददेहस्तु सर्वोपद्रववर्जितः।
अनेन विधिना यस्तु योगीन्द्रो भूमिमण्डले॥
रसनातालुयोगेन यः प्राणं सततं पिबेत्।
अब्दार्धेन भवेत्तस्य सर्वरोगपरिक्षयः, इति॥

अथ शीतलयाः—

जिह्वया वायुमाकृष्य पूर्ववत् कुम्भकादनु।
शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः॥
गुल्मप्लीहोदरं चापि वातपित्तं क्षुधा तृषा।
विषाणि शीतली नाम कुम्भको विनिहन्ति चेति॥

अथ भ्रमर्याः—

वेगोद्घोषं पूरकं भृङ्गनादं भृङ्गीनादं रेचकं मन्दमन्दम् ।
योगीन्द्राणां नित्यमभ्यासयोगाच्चित्ते जाता काचिदानन्दलीलेति ॥

अथ मूर्च्छायाः—

पूरकान्ते गाढतरं बन्धो जालन्धरः शनैः ।
रेचयेन्मूर्च्छनाख्योऽयं मनोमूर्च्छा सुखप्रदेति ॥

अथ भस्त्रिकायाः—

आसनं तु ततो बद्ध्वा सम्यक् कमलसंज्ञकम् ।
समग्रीवोदरः सम्यङ्मुखं संयम्य यत्नतः ॥
प्राणेन रेचयेत् प्राणं हृत्कण्ठे पूरयेत्ततः ।
कपालावधि वेगेन हृत्पद्मावधि मारुतम् ॥
पुनर्विरेचयेत्तद्वत् पूरयित्वा पुनः पुनः ।
यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते ॥
तथैव हि शरीरस्थं चालयेत् पवनो धिया ।
यथा श्रमो भवेद्देहे तथा वेगेन पूरयेत् ॥
यथोदरं भवेत् पूर्णं पवनेन तथा लघु ।
धारयेन्नासिकां मध्ये तर्जनीभ्यां विना दृढम् ॥
कुम्भकं पूर्ववत् कृत्वा रेचयेदिडया ततः ।
वातपित्तश्लेष्महरं शरीराग्निविवर्धनम् ॥
कुण्डलीबोधनं कुर्यात् पापघ्नं सुखदं शुभम् ।
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदमिति ॥

मुख्यसहितस्तु वक्ष्यते—

तस्मादेतांस्तु संसेव्य रोगजालविनाशकान् ।
द्वयं सहितमभ्यस्य केवलं तु ततो न्यसेत् ॥

सोऽयं द्विविधकुम्भकः सोत्कर्षापकर्षभेदेन पुनर्द्विविधो भवति । तत्र सोत्कर्षः प्राणापानयोर्द्वयोरपि रोधः ॥

न प्राणेनाप्यपानेन तथा वायुं समुत्सृजेत् ।
न त्रिख्रिर्जायतेऽपानविसर्गेण ततो जयेत् ॥
शनैर्नासापुटे वायुमुत्सृजन्न तु वेगतः ।
न कम्पयेच्छरीरं तु सोत्कर्षो मुनिभिर्मतः, इति स्मृतेः ॥

सापकर्षस्तु विरुद्धापानपानः ॥

प्राणेन पीडितापानं मुक्त्वा कुम्भकसेवनम् ।
साधकस्य भवेद्योगः कौष्ठ्यवन्धविनाशकः ॥
योगपट्टासने स्थित्वा मध्ये पूरकयोगतः ।
मूलप्रवृत्तितः पूर्वं प्राणायामं समभ्यसेत् ॥
षड्‌भेदेन योगोऽन्यो महासिद्ध्यादिदायकः, इत्यादिस्मृतेः ।

अत्र नास्ति रोगसम्भावना । अपानस्यानिरोधाद्यतो योगपट्टासने साधितोऽयं मलशोधनमात्रफलश्चात् प्रथमाऽभ्यास एवावश्यक इति भावः । इत्थञ्च रेचकपूरकौ द्वौ, सहितः, केवलश्चेति द्वावप्युत्कर्षापकर्षकाविति षट्प्रकारः प्राणायामो भवति । पद्मपुराणे—

प्राणः प्राणमयो वायुर्वायुरात्मा निगद्यते ।

तस्यायामः सुसुर्दिष्टः षट्प्रकारः सुयोरभिरिति प्रकृतविभागाभिप्रायेण षट्प्रकारत्वकथनात् ॥

सोत्कर्षापकर्षभेदेन द्विविधोऽयं कुम्भको मिलित्वा पुनः सप्तविधो भवति ॥

यथाह देवलः—

कुम्भः सप्तविधो ज्ञेयो रेचितादिप्रभेदतः ।
रेचितं पूरितः शान्तः प्रत्याहारोत्तरोऽधरः ॥
समश्चेति विनिर्दिष्टः कुम्भकः सप्तभेदतः, इति ॥

एतेषां लक्षणानि चाह—

रेचितस्य बहिस्तम्भो वायो रेचितकुम्भकः ।
पूरकेण विना सम्यग् योगोऽयं सुखदो नृणाम् ॥ ॥ १ ॥
पूरितस्योदरे रोधः पश्चाद्रेचकसंयुतः ।
नाडीशुद्धिकरः सम्यक् प्रोक्तः पूरितकुम्भकः ॥ ॥ २ ॥
कायस्यान्तर्बहिर्यामिर्या स स्याच्छान्तकुम्भकः ॥ ॥ ३ ॥
स्थानयोरन्तरे रोधः प्रत्याहाराख्यकुम्भकः ॥ ॥ ४ ॥
आपूरयेत् क्रमादूर्ध्वमूर्ध्वे रोधो हृदादिषु ॥ ॥ ५ ॥
उत्तरः कुम्भकः स स्यादधोऽधो मूर्द्धतोऽधरः ॥ ॥ ६ ॥
रेचनापूरणे त्यक्त्वा मनसा मरुतो धृतिः ।
या नाड्यादिप्रदेशेषु समः कुम्भः प्रकीर्त्तितः ॥ ७ ॥

अत्र शान्तसमौ केवलस्य भेदौ । अन्ये सहितस्य भेदाः । प्रत्याहाराख्यस्तूभयानुगत इति बोध्यम् । कायस्येति रेचकपूरकौ

विहाय शरीरस्यान्तर्बहिश्च मनसा वायोर्धारणा स्यादित्यर्थः स्थानयोरित्यत्र वीप्सा ज्ञातव्या । पादतलगुल्फनाभिहृदुदरकण्ठघण्टिकाभ्रूमध्यललाटब्रह्मरन्ध्रादीनि स्थानानि । एतेषु स्थानेषु द्वयोर्द्वयोरन्तरे मध्ये वायोर्धारणं प्रत्याहाराख्यकुम्भकः ।

हृदादिस्थानेषु मूर्ध्नतो हृदयपर्यन्तं रेचनापूरणे त्यक्त्वा मनसा वायोर्धारणात् समाख्यकुम्भकः। स्थानभेदात् समशान्तयोर्भेदः । अथ पूरितकुम्भककमः स्कान्दे—

अथवा ह्यासने यस्मिन् सुखमस्योपजायते ।
स्वस्तिकादौ तदभ्यस्य यागं युञ्जीत योगवित् ॥
निमीलिताक्षः सत्त्वस्थो दन्तैर्दन्तानसंस्पृशन् ।
तालुस्थाचलजिह्वश्च संवृतास्यः सुनिश्चल ॥
सन्नियम्येन्द्रियग्रामं नातिनीचोच्छ्रितासन. ।
रविणा प्राणमाकृष्य पूरयेदुदरीं दरीम् ॥
कुम्भयित्वा शनै. पश्चाद् योगी चन्द्रेण रेचयेत् ।
युक्तं युक्त त्यजेद्वायुं युक्तं युक्तं च पूरयत् ॥
युक्तं युक्तं च बध्नीयादित्थं सिद्ध्यति योगवित् ॥

योगभास्करे—

इडया पूरयेद्वायुं धारयेत्तु सुषुम्नया ।
रेचयेत् पिङ्गलानाड्या प्राणायामक्रमः स्मृत ॥

तन्त्रेऽपि—

सम्यग्देशे समास्तीर्य ह्यासनं मृदुसंयुतम् ।
तत्रोपविश्य मेधावी स्वस्तिकादिसमन्वितः ॥
ऋजुकायः सुखासीन. प्रणमदिष्टदेवताम् ।
ततो दक्षिणहस्तस्य अङ्गुष्ठेनैव पिङ्गलाम् ॥
निरुद्ध्य पूरयेद्वायुमिडया तु शनैः शनै. ।
यथाशक्त्या निरोधेन तत' कुर्याच्च कुम्भक' ॥
ततस्त्यजेत् पिङ्गलया शनैरेव न वेगत' ।
पुन पिङ्गलयाऽऽपूर्य पूरयेदुदरं शनैः ॥
धारयित्वा यथाशक्ति रेचयेदिडया शनै ।
यया त्यजेत्तयाऽऽपूर्य धारयेदविरोधतः ।
एवं प्रातः प्रकुर्वीत शक्त्या विंशतिकुम्भकान् ॥

एवं मध्याह्नसमये कुर्याद्विंशतिकुम्भकान् ।
ततः सायं प्रकुर्वीत तथा विंशतिकुम्भकान् ॥
एवमेवार्धरात्रेऽपि पुनर्विंशतिकुम्भकान् ।
कुर्याद्रेचकपूराभ्यां सहितं प्रतिवासरम् ॥
सहितो रेचकपूराभ्यां तस्मात् सहितकुम्भकः ।
एवं मासद्वयं कुर्यान्नाडीशुद्धिस्ततो भवेत् ॥
यदा नाडीविशुद्धिः स्यात्तदा चिह्नानि योगिनः ।
जायन्ते तानि देहे वै तन्मे निगदतः शृणु ॥
शरीरलघुता दीप्तिर्जठराग्निविवर्धनम् ।
कृशत्वं च शरीरस्य तदा जायेत निश्चितमिति ॥

अयं च पूरकपूर्वकः क्रम औत्सर्गिकः । सूत्रकारस्य रेचकपूर्वकोऽभिमतः 'बाह्याभ्यन्तरस्तम्भवृत्तिः' इति सूत्रयता तथा ज्ञापनात् । 'आरेच्यापूर्य यत् कुर्यात् स वै सहितकुम्भकः' इति स्कान्दोक्तेश्च । अयं च नाडीचक्रमलशोधकः केवलश्च सिद्धिपर्यन्तमभ्यसनीयः । 'यावत् केवलसिद्धिः स्यात्तावत् सहितमभ्यसेत्' इति स्मृतेः । एतस्य प्रमाणं तु श्रुतौ—

सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह ।

त्रिः पठेदायतः प्राणः प्राणायामः स उच्यते, इति ॥ सप्तव्याहृतीनामादौ सप्त प्रणवाः । सुवरिति याजुषेण पाठेन सप्तव्याहृतिसूत्रयादेशगायत्र्यादौ शिरोन्तेऽप्यादौ च प्रणवत्रयम् । वरेणीयमिति सामपाठेन चतुर्विंशतिर्गायत्र्याम् । आपोज्योतिरसोऽमृतम्, ब्रह्मभूर्भुवः स्वरोमिति शिरोमन्त्रेषु वरोमिति याजुषेण पाठेन षोडश । एवं द्विपञ्चाशदक्षराणि सम्पद्यन्ते । तानि च त्रिगुणितानि षट्पञ्चाशदधिकं शतं भवन्ति । तैरेतावत्संख्याकैः प्रणवैरेव वा प्राणायामः करणीय इत्यर्थः ॥ लिङ्गपुराणे तु—

प्राणायामस्य मानं तु मात्राद्वादशकं स्मृतम् ।
नीचो द्वादशमात्रस्तु सकृदुद्घात ईरितः ॥
मध्यमश्च द्विरुद्घातश्चतुर्विंशतिमात्रकः ।
मुख्यस्तु यस्त्रिरुद्घातः षट्त्रिंशन्मात्र उच्यते ॥
प्रस्वेदकम्पनोत्थानजनकश्च यथाक्रमम् ।
जलेन श्रमजातेन गात्रमर्दनमाचरेत् ॥

दृढता लघुता चैव योगिनस्तत्र जायते ।
आनन्दो जायते मुख्यो ध्वनिसम्प्राप्तिरेव च ॥
अदीनत्वमरोगित्वमल्पनिन्द्रादिमूत्रकम्, इति ॥
मात्रा च स्कन्दपुराणे—
जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
करोति छोटिकां यावत् सा मात्रेति च गीयते ॥
नन्दिपुराणे—
त्वरितं लघुभिर्वर्णैर्मात्रा द्वादशभिः स्मृतेति ॥
मार्कण्डेये—
निमेषोन्मेषणे मात्रा कालो लघ्वक्षरं तथा ।
प्राणायामस्य संख्यार्थं स्मृतो द्वादशमात्रिकः, इति ॥

निमिषादिलघ्वक्षरान्तं मात्राप्रमाणम् । तदेव विशिष्य दर्शयत्युत्तरार्धेन । द्वादशमात्रिको द्वादशगुणितो निमेषादिरयं पदार्थः प्राणायामस्य संख्यार्थं स्मृत इत्यर्थः। दशगुर्वक्षरोच्चारणं वा नाडी, गुर्वक्षरत्वञ्च द्विरिति स्वरशास्त्रानुसारात् । इयं लघुमात्रा । अतिमात्रालक्षणं त्वाह याज्ञवल्क्यः—
गोदोहं चक्षुपातं वा इषुक्षेपमथापि वा ।
घण्टायास्तनितं वापि अतिमात्रा तु दाहृतेति ॥
उद्घातलक्षणं तु—
प्राणेनोत्सार्यमाणेन अपानः पीड्यते यदा ।
गत्वा चोर्ध्वं निवर्तेत एतदुद्घातलक्षणमिति ॥

पूरकमात्रा तु कुम्भकचतुर्थांशः । रेचकमात्रा कुम्भकार्धा । पूरकं षोडशभिः कृत्वा चतुःषष्ट्या तु मात्रया * धारयेद्रेचयेत् पश्चाद् द्वात्रिंशन्मात्रया पुनरिति सामान्यशास्त्रात् ।
अथवा कौर्मे—
मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः ।

* मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रिकोत्तमः, इति सामान्योक्ते पूरकादिषु त्रिष्वपि द्वादशमात्रादिरूपैकैव संख्या । पूरकादिषु विशेषवचनादिति दिक् ॥

सोऽयमान्तर कुम्भकः । पूरितस्यान्तःप्रदेशे धारणात् । रेचितकुम्भकस्तु बाह्यकुम्भकः । रेचितस्य वायोर्बहिः स्थापनात् ।

अयं च पूरकवर्जितः केवलकुम्भकं अन्तरङ्गो बहुतरनियमापेक्षश्च भवतीति यद्यपि, प्रच्छर्दनेति सूत्रेणाहतस्तथापि इत्यादे, इत्थं मासत्रयाभ्यासात्कुम्भयायामसंयमनात् * शुद्धनाडीगणो योगी सिद्धप्राणोऽभिधीयते इत्यादिना एतस्यैव नाडीशोधकत्वोक्तेर्युक्तिसिद्धत्वाच्च नाडीशुद्ध्यर्थं पूरितकुम्भकस्यैवाभ्यासो युक्त इति दिक् ॥

तदेते सर्वे पुनः सगर्भागर्भभेदेन द्विविधा उक्ता नन्दिपुराणादौ-

प्राणायामोऽस्य मथनं तस्यादौ युक्तिरुच्यते ।
अगर्भश्च सगर्भश्च द्विविधः सम्प्रकीर्त्तितः ॥
जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वितः ।
अगर्भाद्गर्भसंयुक्तः प्राणायामः शताधिकः ॥
जाप्येन तु जपं कुर्य्यादविलम्बितमद्भुतम् ।

मनसैव प्रसंख्यातं प्राणायामविधौ सदेत्यादि ॥ जाप्येन प्रणवादिमन्त्रेण, भगवन्नाम्नादिना वा, ध्यानं मन्त्रस्य, मन्त्रप्रतिपाद्यस्य च भगवतो नारायणस्य सगुणं निर्गुणं वा ध्यानप्रकरणे वक्ष्यमाणम्। इत्थञ्च सगर्भस्य त्रयो भेदा भवन्ति– सधूमकः, सज्वालः, प्रशान्तश्चेति । तत्र मन्त्रतदनवयवमात्राध्यानात् सधूमकः । मन्त्रतदवयवतदर्थध्यानात् सज्वालः । मन्त्रतदवयवतद्वाच्यसगुणध्यानरहितकेवलस्वात्ममात्रध्यानात् प्रशान्तः ।

तस्य मात्रात्रयध्यानात् प्राणायामः सधूमकः ।
कलाश्च देवताध्यानात् सज्वालः परिकीर्त्तित ॥
मात्राधूमांशानिर्वस्तुयोगनाडीसमाश्रयात् ।

प्रशान्त उक्तः शास्त्रेषु सर्वभावविवर्जितः, इत्यादिस्मृतेः । तस्य=प्रणवस्य । मात्राधूमेति । मात्राधूम देवताज्वालारूपनिर्गतपरमात्मवस्तुसमाश्रयाद् योगनाडीसमाश्रयणाच्च प्रशान्त इत्यर्थः । अयं च सोत्कर्षः केवलकुम्भकायस्य प्रशस्ततमो भवति । केवले कुम्भके सिद्धे रेचकपूरकवर्जित * न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते इत्याद्युदाहृतवाक्यैरेतस्यैवोत्कृष्टत्वख्यापनात् । एवं प्राणायाममभ्यस्यतः सिद्धबिन्दोः । क्षीणपापस्यावस्थाचतुष्टयं संपद्यते। तदुक्तं शिवयोगे– आरम्भश्च घटश्चैव तथा परिचयः पुनः * निष्पत्तिश्चेति योगस्य स्यादवस्थाचतुष्टयमत्र प्राणायामप्रकरणोक्तं चतुष्कालिकप्राणायामाभ्यासादिना नाडीशुद्धौ आरम्भावस्था भवति।

सस्या लक्षणं तेजस्वित्वसुगन्धित्वादि । अथ घटावस्था- प्राणापानौ नादबिन्दुर्जीवात्मपरमात्मनोः * मिलित्वा घटने यस्मात्तस्माद् घट उच्यते । याममात्र प्राणापानादिकमेकत्र कर्त्तुं समर्थो घटावस्थामाप्नोति । तस्यामवस्थायां कामचारित्वदूरदर्शित्वादृश्यत्वादि भवति । तदुक्तम्—

यदा भवेद् घटावस्था योगिनोऽभ्यासिनः सदा ।
तदा संसारचक्रेऽस्मिन् नास्ति तद्यन्न साधयेत् ॥

अथ परिचयावस्था—

दण्डाष्टकं यदा वायुर्निश्चलो योगिनो भवेत् ।
ततः परिचयावस्था योगिनोऽभ्यासिनो भवेत् ॥

अस्यामवस्थायां वायुः सूर्याचन्द्रमसौ त्यक्त्वा षट्चक्राणि भित्वा सुषुम्नाव्योम्नि सञ्चरति । ततः कर्मणां त्रिकूटं पश्यति । तच्च प्रणवजपकायव्यूहोपभोगादिना नाशयेत् । धारणाप्रकरणोक्तफलं च भवति ॥

अथ निष्पत्त्यवस्था—

ततोऽभ्यासक्रमेणैव निष्पत्तिर्योगिनो भवेत् ।
अनादिकर्मबीजानि यतश्छित्वाऽमृतं भवेत् ॥

अस्यामवस्थायां, गृहीत्वा चेतनां वायुः क्रियाशक्तिं च वेगवान्*सर्वचक्रं विजित्वाशु ज्ञानशक्तौ विलीयते, इत्यन्यत्र विस्तरः॥

सोऽयमखिलो योगो योग्यदेशकालादौ प्रतिविरुद्धवर्जनयोग्यभोजनादिना सेव्यः । तत्र देश उक्त आदित्यपुराणे—

एकान्तगिरिदुर्गेषु तीर्थायतनगह्वरे ।
सुशोभने मठे वाऽथ कार्यं योगस्य सेवनम्, इति ॥

मठलक्षणं तु योगतत्त्वप्रकाशे—

सुशासनं मठं कुर्यात् सूक्ष्मद्वारं तु निष्प्रभम् ।
सुलिप्तं गोमयेनैव सुधया वा प्रयत्नतः ॥
मक्षिकादिकदोषैश्च वर्जितं मार्जितं सदा ।
वासितं च सुगन्धेन धूपितं गुग्गुलादिभिरिति ॥

हठप्रदीपिकायाम्—

अल्पद्वारमरन्ध्रगर्तविवरं नात्युच्चनीचायतं
सम्यग्गोमयसान्द्रलिप्तविमलं निःशेषजन्तूज्झितम्

बाह्ये मण्डपकूपवेदिरचितं प्राकारसंवेष्टितं
प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिरिति ॥

कालस्तु स्वरशास्त्रानुसारेण । कुमारो वा युवा । प्रतिषिद्धं शीतोष्णजलवह्निसशब्दस्थलम् । अतितृप्तिक्षुधार्त्तिविण्मूत्रादिबाधा-मार्गखेदचिन्ताबाहुल्यसमयः । लवणादिभोजनं च ॥

नातिशीते न चोष्णे च न शब्दाग्निजलान्विते ।
जीर्णगोष्ठे शुष्कपत्रचये वल्मीकसंश्रये ॥
देशेष्वेतेषु तत्त्वज्ञो योगाभ्यासं विवर्जयेत् ।
नातितृप्तः क्षुधार्त्तो वा न विण्मूत्रप्रबाधितः ॥
नाध्वखिन्नो न चिन्तार्त्तो योगं युञ्जीत तत्त्ववित् ।
लवणं सार्षपं चाम्लमुष्णं रूक्षं च तीक्ष्णकम् ॥
अतीव भोजनं त्याज्यमतिनिद्रातिभाषणम् ।
हारीतशाकं सौवीरतैलमत्स्यनिलास्तथा ॥
अजादिमांसं मद्यं च दधिकोलकुलत्थकाः ।

पिण्याकं हिङ्गु लशुनं तक्राण्येतानि वर्जयेद्, इत्यादिस्मृतेः । योग्यभोजनं तु प्रथमाभ्यासे क्षीरपानमेव । अभ्यासे प्रथमे काले प्रशस्तं क्षीरभोजनम् * ततोऽभ्यासे दृढीभूते न तादृङ्नियमाग्रह, इति । क्षीराद्यलाभे तु गोधूमादिकं योग्यं, गोधूमशालियवषाष्टिकशोभनान्नं मिष्टान्नमण्डनवनीतसितामधूनि * सुण्ठीपटोलकफलादिकपञ्चशाकं मुद्गाद्यमल्पमुदकं च मुनीन्द्रपथ्यम् ॥ कर्पूरं मधुरं स्निग्धं गव्यं ताम्बूलमेव च * चूर्णेन रहितं धातुपोषणं योगिना शुभम् ॥ भोजनं च यदा यदा क्षुधा तदा तदा मितमेव कार्यम् । अन्यथा योगाग्निनिरोधेन धातुवैषम्येण च नानारोगोत्पत्त्या योगप्रतिबन्धेन ज्ञानद्वारकमोक्षासिद्धेः । नचैतत् संन्यासाश्रमिणः कथम् । तस्य पुनर्भोजननिषेधादिति वाच्यम् । एककालं द्विकालं वा योगाभ्यासपरो यतिः * आचरेद् भोजनं रम्यं हितं पथ्यं मितं सदेति स्मृतेः । निषेधवाक्यस्यायोगिसंन्यासिविषयत्वादिति दिक् ॥

इत्थं नियमेन योगं सेवयतो न भवति योगेन प्रतिबन्धः । यस्त्वेतान्नियमाननादृत्य सहसैव प्रवर्त्तते, तस्य तु भवन्ति दोषैः प्रतिबन्धः । ते च दोषाः — बाधिर्यं जडता लोपः स्मृतेर्मूकत्वमन्धता * कामश्च जायते पूर्णः सर्वज्ञानविनाशनः, इत्यादय. । प्रमादाज्ञाय-

मानेष्वेतेषु उपायमाह दत्तात्रेयः—

स्निग्धां यवागूमत्युष्णां भुक्त्वा तत्रैव धारयेत् ।
वातगुल्मप्रशान्त्यर्थमुदावर्ते तथा दधि ॥
यवागूं चापि पवनं वायुग्रन्थिं प्रतिक्षिपेत् ।
तद्वत् कम्पे महाशैलं स्थिरं मनसि धारयेत् ॥
विघाते वचसो वाचि बाधिर्ये श्रवणेन्द्रिये ।
तथैवाम्रफलं ध्यायेत् तृष्णार्तो रसनेन्द्रिये ॥
देशकालानुसारेण धारयेद्धारणां शुभाम् ।
अत्युष्णे तु महाशीतां तथा शीते विदाहिनीम् ॥
कीलं शिरसि संस्थाप्य काष्ठं काष्ठेन ताडयेत् ।
लुप्तस्मृतेः स्मृतिः सद्यो योगिनस्तत्र जायते ॥
द्यावापृथिव्यौ वाय्वग्नी व्यापिनावपि धारयेत् ।
अमानुषाः सत्त्वजातबाधाश्चैताश्चिकित्सिताः ॥
अमानुषं सत्त्वमन्तर्योगिनं प्रविशेद्यदि ।
वाय्वग्निधारणाच्चैतद्देहसंस्थं विनिर्दहेद्, इत्यादि ॥ इति सङ्क्षेपः ॥ ५१ ॥

चतुर्विधस्य प्राणायामस्य फलमाह—

ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥

ततः तस्मात् प्राणायामात् प्रकाशावरणम् । आव्रियते बुद्धिसत्त्वप्रकाशो बुद्धिसत्त्वगतं सार्वज्ञमनेनेत्यावरकं तमः पापं च क्षीयते विनश्यतीत्यर्थः । तदुक्तं मनुना— दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ॥ तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहादिति । दोषाः पापानि तत्कार्यमावरणादीनि च । ननु तर्हि तपोध्यानाभ्यां प्राणायामोऽन्यथासिद्धः । तपसैव पापनिवृत्तेः, ध्यानेन चावरणनिवृत्तेः सम्भवादिति चेन्न । ज्ञानप्रतिबन्धकपापादिक्षये प्राणायामस्यैव मुख्योपायत्वात् । प्राणायामं विना मनआदीन्द्रियाणां जयासम्भवेन आवरणशान्तिकनिवृत्तेरसम्भवात् । ध्यानादेरप्युत्पादासम्भवाच्च । तदुक्तं स्कान्दे—

समस्तेन्द्रियवृत्तिश्च प्राणो वायुः प्रकीर्तितः ।
तज्जयादिन्द्रियाण्येव निर्जितानि भवन्ति हि ॥

वृत्तिर्वृत्तिमतोर्यस्मादभेदः परिकीर्त्तितः ।
तस्माद् वृत्तिजयादेव वृत्तिमानिर्जितो भवेत् ॥
ज्ञानवैराग्ययोक्तृभ्यां प्राणायामकशाहतान् ।
इन्द्रियाश्वान् विनिर्जित्य सर्वमेव जितं भवेत् ॥
इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभाविति ॥

इन्द्रियाण्येवेत्यत्र एवकारो भिन्नक्रमः । तज्जयादेवेत्यर्थः । तस्मात्सर्वस्यापीन्द्रियजयमूलकत्वात्तदर्थं फलचिन्तेन प्राणायामाऽभ्यासोऽवश्यं कार्य इति भावः ॥ ५२ ॥

समाध्यनुकूलं फलान्तरमाह—

धारणासु च योग्यता मनसः ॥ ५३ ॥

धारणा वक्ष्यमाणलक्षणास्तासु मनसः प्राणायामाभ्यासेनाऽविकृतस्यान्त करणस्य योग्यता विक्षेपरहित स्थिरीभावो भवतीत्यर्थः ॥५३॥

प्रत्याहार लक्षयति—

स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार
इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥

चित्तस्य विषयो मोहनीयो रञ्जनीय कोपनीयश्च रूपादिस्तेन सम्प्रयोगस्तदभिमुखता, तत्परित्यागोऽसम्प्रयोगो वैराग्येणान्तर्मुख-परिणाम इति यावत् । तस्मिन् सति मधुकरराजमनु मधुमक्षिकाणामिव यश्चित्तस्वरूपानुकार एवेन्द्रियाणां चित्तनिरोधे साधनान्तर विना तद्वृत्तिनिरोधश्चित्तलक्ष्याभिमुखतारूपः सः । इन्द्रियाणि विषयेभ्य प्रतीपमाह्रियन्तेऽस्मिन्निति व्युत्पत्ते प्रत्याहारपदार्थ इत्यर्थं । इवशब्दश्चित्तवत् तत्त्वाभिमुखतेन्द्रियाणां नास्ति, किन्तु विषयान्तरसचाररहित्यमात्रमिति ज्ञापनार्थ. । सोऽय प्रत्याहारो द्विविध उक्तो महाभारते मोक्षधर्मे—

इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा शुचि ।

दशद्वादशाभिर्वापि चतुर्विंशात् परं तत , इति॥इन्द्रियार्थेभ्यः शब्दादिभ्यो मनसा निवर्त्येति फलीभूत प्रत्याहार प्राणायामसाध्य-

माह । द्वयष्टादशभिर्वेति । द्वाविंशतिसंख्याभिः संचोदनाभिर्धिष्ठ्याऽश्वस्य प्रतोदनस्थानीयाभिः प्रेरणाभिः प्रतिमानात्मानं जीवं चतुर्विंशाद्दशानात् प्रकृतिसंज्ञकात् परं प्रति गन्तुं प्रचोदयात् प्रेरयेत् । तत्राऽष्टादशसु स्थानेषु वायोः प्रत्याहरणं याज्ञवल्क्य आह—

अष्टादशसु यद्वायोर्मर्मस्थानेषु धारणम् ।
स्थानात् स्थानात् समाकृष्य प्रत्याहारो निगद्यते, इत्युपक्रम्य,
संपूर्य कुम्भवद्वायुमङ्गुष्ठान्मूर्ध्नि मध्यतः ।
धारयस्वानिलं बुद्ध्या प्राणायामप्रचोदितः ॥
व्योमरन्ध्रात् समाकृष्य ललाटे धारयेत् पुनः ।
ललाटाद्वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ॥
भ्रूमध्याद्वायुमाकृष्य नेत्रस्थाने निरोधयेत् ।
नेत्राद्वायुं समाकृष्य नासामूले निरोधयेत् ॥
नासामूलात्तु जिह्वाया मूले प्राणं निरोधयेत् ।
जिह्वामूलात् कण्ठकूपे ततो वायुं निरोधयेत् ॥
कण्ठकूपात्तु हृन्मध्ये हृन्मध्यान्नाभिमध्यमे ।
नाभिमध्यात् पुनर्मेढ्रे मेढ्राद् वह्न्यालये ततः ॥
देहमध्याद् गुदे गार्गि गुदादूरुमूलके ।
ऊरुमध्यात्तयोर्मध्ये तस्माज्जान्वोर्निरोधयेत् ॥
चितिमूले ततस्तस्माज्जङ्घयोर्मध्यमे तथा ।
जङ्घां ततः समाकृष्य वायुं गुल्फे निरोधयेत् ॥
स्थानात् स्थानं समाकृष्य यस्त्वेवं धारयेत्प्रिया ।
निष्पापः स विशुद्धात्मा जीवेदाचन्द्रतारकम् ॥
एतत्तु योगसिद्ध्यर्थं सामस्त्येनापि कीर्तितम् ।
प्रत्याहारेषु सर्वेषु प्रशस्तमिति योगिभिरिति ॥

एवमष्टादश प्रत्याहारचोदनाः । धारणाध्यानसमाधिसंज्ञास्तिस्रः । ततः सत्त्वपुरुषान्यताख्यातिसंज्ञा द्वाविंशतिचोदनाः । ततोऽपि सम्प्रेरितो जीवो नदीसमुद्रन्यायेन निर्विशेषचिन्मात्रतां प्रतिपद्यत इत्यर्थः ॥ ५४ ॥

इत्थं प्राप्ताप्राप्तविवेककरीत्या प्रत्याहारस्य फलमाह—

ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

ततः प्रत्याहारादिन्द्रियाणां मनश्चाद्येकावशानां भोगकारणानां परमा वश्यता परमो जय. । मोहनीयादिस्वरूपैः रूपादिभिर्विषयैः बहिर्मुखतां नीयमानान्यपि न यान्तीत्यर्थः । इयमेव वश्यता योगद्वाराऽपरोक्षप्रमाया हेतुः । एतस्याभावादेव सौभरिप्रभृतीनां योगात् प्रच्यावोऽपि । अत एवोक्तं भगवता—

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मन. ॥
तानि सर्वाणि संयम्य युक्तं आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता, इति ॥

तदेवमेकाग्रताभूमिसम्पादनद्वारा योगसाधनत्वेन योगस्य बहिरङ्गानि यमादिप्रत्याहारान्तानि सफलानि द्वितीये पादे प्रोक्तानि। धारणात्रयस्य सिद्धियाहुल्यात् तत्फलभूताभिः सिद्धिभिः सह तत्प्रतिपादनाय तृतीयः पादो भविष्यति ॥ ५५ ॥

इति श्रीनारायणतीर्थकृतायां योगसिद्धान्तचन्द्रिकायां साधननिर्देशो नाम द्वितीयः पाद. ॥ १ ॥ २ ॥



## अथ विभूतिपादस्तृतीयः ॥ ३ ॥

उक्तानि यमादिप्रत्याहारान्तानि योगाङ्गानि । इतः परं धारणादित्रयं तत्फलं च व्युत्पादयिष्यन् प्रथमं धारणां लक्षयति—

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

देशे आध्यात्मिके नाभिचक्रहृदयकण्ठमुखभ्रूमध्यमूर्धनासादौ बाह्ये पर्वतमस्तकाकाशादौ बन्धश्चित्तस्य विषयान्तरपरिहारेण बध्चिततस्य आपन्नं तदैकाग्र्यं सा धारणेत्यर्थः । तदुक्तमीश्वरगीतायां—

हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वतमस्तके ।
एवमादिप्रदेशेषु धारणा चित्तबन्धनमिति ॥

अत एव ध्यानाद्भेदः । ध्यानस्य देशानोपलक्षितपरमेश्वरैकाग्र्यरूपत्वात् । धारणायास्तु ध्येयाधारैकाग्र्यरूपत्वात् । तदुक्तं तत्रैव—

देशावस्थितमालम्ब्य बुद्धेर्या वृत्तिसन्ततिः ।
वृत्त्यन्तरैरसंस्पृष्टा तद्ध्यानं सूरयो विदुरिति ॥

सेयं धारणा भूतानां भेदेन, स्तम्भिनी प्लाविनी दहनी भ्रामणी शमनी चेति पञ्चधा भवति । तत्र पादादिजानुपर्यन्तदेशे हरितालनिभलकारसवेदचतुष्कोणपृथिव्यैकाग्रता स्तम्भिनी । इयमेव पार्थिवी धारणेत्युच्यते । जानुतः पायुपर्यन्ते देशे अर्द्धेन्दुनिभवकारसविष्णुकुन्दाभजलैकाग्रता प्लाविनी । इयमेव वारुणी धारणेत्युच्यते । आपायोर्हृदयपर्यन्ते देशे इन्द्रगोपाभत्रिकोणरेफसरुद्रयह्नयैकाग्रता दहनी । इयमेव तैजसी धारणेत्युच्यते । हृदयाद्भ्रूमध्यपर्यन्ते देशेऽञ्जनसन्निभसवृत्तसयकारसेशवाय्वैकाग्रता भ्रामणी । इयमेव वायवी धारणेत्युच्यते । भ्रूमध्याद् ब्रह्मरन्ध्रपर्यन्ते देशे सहकारविशुद्धवारिसदृशसदाशिवाकाशैकाग्रता शमनी । इयमेव नामसी धारणेत्युच्यते ॥

अथवा,

नाभेरधो गुदस्योर्ध्वं धारयेत् पञ्च नाडिकाः ।

वायुं ततो भवेत् पृथ्वी धारणा घटिकाद्वयी ।
पृथिवीसम्भवो मृत्युर्न भवेत् तस्य योगिनः ॥
नाभिस्थाने ततो वायुं धारयेत् पञ्च नाडिकाः ।
ततो जलाद्भयं नास्ति जले मृत्युर्न योगिनः ॥
नाभ्यूर्ध्वमण्डले वायुं घटिका पञ्च धारयेत् ।
आग्नेयी धारणा प्रेयं न मृत्युस्तस्य वह्निना ॥
न दह्यन् शरीरं च प्रविष्टे चाग्निसञ्चरे ।
नाभेरूर्ध्वभ्राणमध्ये तु प्रदेशत्रयसंमिते ॥
धारयेत् पञ्चघटिका वायुं सेयं च वायवी ।
धारणा नैव वायोस्तु भयं भवति योगिनः ॥
भ्रूमध्यादुपरिष्टात्तु धारयेत् पञ्च नाडिकाः ।
वायुं योगी प्रयत्नेन सेयमाकाशधारणा ।
आकाशधारणां कुर्वन् मृत्युं जयति शाश्वतम् इति ॥
एवं मनसो युक्तस्य धारणा मूर्ध्नि ॥ इत्थं हि धारणाः सप्त कुर्वन् योगी भवेद् दृढः ॥ ब्रह्मणः प्रलयेऽप्यस्य मृत्योर्भीतिर्न विद्यते ॥ वायुसंयमनपूर्वकं तत्त्वैकाग्रता कार्येत्युक्तश्लोकानामर्थः । एतासामेव च फलं बहुकालजीवित्वादिरूपं भुशुण्डादीनां योगवासिष्ठे प्रतिपादितम् । एतादृश्यो धारणाः परिच्छिन्नगोचरा अपि सिद्धिसम्पादकतया शास्त्रेषु बहुधा निरूपिताः । मुमुक्षुयोग्या त्वन्यादृश्येव । सा चोक्ता गारुडे—
प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत् ।
एतावत्कालपर्यन्तं मनो ब्रह्मणि धारयेदित्यादिभिः । इयं च धारणा भगवत्कृपातश्च भवतीति संक्षेपः । अत्रेव लक्ष्ययोगस्यान्तर्भावः ॥ १ ॥
ध्यानं लक्षयति—

तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥

तत्र हृत्पुण्डरीकादिदेशोपलक्षिते या प्रत्ययैकतानता प्रत्ययस्य चित्तवृत्तेर्विजातीयप्रत्ययतिरस्कारेण धारावाहिकता सा ध्यानमित्यर्थः । तदुक्तं विष्णुपुराणे—
तद्रूपप्रत्यये चैकाग्रसन्ततिश्चान्यनिःस्पृहा ।

तद्ध्यानं प्रथमैः षड्भिरङ्गैर्निष्पाद्यते नृपेति ॥

तच्च ध्यानं सगुणनिर्गुणभेदेन द्विविधम् । तत्र सगुणमाह याज्ञवल्क्यादिः । यथा—

नीलोत्पलदलश्यामं पीतकौशेयवाससम् ।
चतुर्भुजं शङ्खचक्रगदापद्मादिशोभितम् ।
कोटिसूर्यप्रतीकाशं ध्यायेदच्युतमव्ययम् ॥
अथैवं चिन्तयेद्देव निर्मलं शान्तं शुभम् ।
शुद्धस्फटिकसङ्काशं महादेवं महेश्वरम् ॥
परात्परतरं नित्यं नीलकण्ठं त्रिलोचनम् ।
ब्रह्माणं च सदा ध्यायेत् सर्वपापप्रणाशनम् ॥
मकारार्थो महादेव उकारार्थो हरिर्मतः ।
अकारार्थो भवेद् ब्रह्मा भावयेत्तु ततः सदा ।
तेषामेषां ततः सद्यः क्षीणपापो भवेन्नरः, इति ॥

निर्गुणस्य तु—

एकं ज्योतिर्मयं शुद्धं सर्वगं व्योमवद् दृढम् ।
अव्यक्तममलं नित्यमादिमध्यान्तवर्जितम् ॥
स्थूलसूक्ष्ममनाकाशमसंस्पर्शमचाक्षुषम् ।
न रसं न च गन्धाढ्यमप्रमेयमनूपमम् ॥
आनन्दमजरं नित्यं सदसत्सर्वकारणम् ।
सर्वाधारं जगद्रूपममूर्तमजमव्ययम् ॥
अदृश्यं दृश्यमव्यक्तं हृत्स्थं सर्वतोमुखम् ।
सर्वदृक् सर्वतः पादं सर्वस्पृक् सर्वतः शिरः ॥
ब्रह्म ब्रह्ममयोऽहं स्यामिति तत्त्वस्य वेदनम् ।
तदेतन्निर्गुणं ध्यानमिति योगविदो विदुरिति ॥

ध्यानफलं तु प्रसिद्धं पुराणेषु । यथा—

नाश्वमेधेन तत्पुण्यं न च वै राजसूयतः ।
यत्पुण्यमेकध्यानेन लभेद्योगी स्थितात्मनः ॥
महापातकयुक्तोऽपि ध्यायन्निमिषमच्युतम् ।
पुनस्तपस्वी भवति पङ्क्तिपावन एव सः, इत्यादि ॥

अत्र सूत्रे, तत्रेति पदं देशविशेषपरमेतन्मात्रिकप्रत्ययाभिप्राये- ण । सर्वध्यानस्यानियमात् । अतोऽस्यापि धारणेव ध्यानपूर्वक-, ... ।

ध्येय ब्रह्मणि प्रोक्तं ध्यानं द्वादश धारणा * इत्यादिना । तस्यैव द्वादशप्राणायामकालेन धारितचित्तस्य द्वादशधारणाकालावच्छिन्नं चिन्तनं ध्यानं प्रोक्तमित्यर्थः ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति—

## तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥

तदेवेति ॥ तदेव स्वच्छचित्तस्य वृत्तिप्रवाहरूपं ध्यानमेव अर्थमात्रनिर्भासम् । अर्थमात्रस्य प्रत्ययादिवर्जितस्य ध्येयस्य निःशेषेणासन्दिग्धसर्वात्मना भासो भानं यत्र तथाभूतम् अहमिदं चिन्तयामीत्येवंविधाकारशून्यम् । अत एव निर्विकल्पकरूपत्वेन प्रत्यक्षागोचरत्वात् स्वरूपशून्यमिव, न वस्तुतःस्वरूपशून्यम् अनुमानवेद्यत्वात्तु तादृशं ध्यानं भावनाविशेषः समाधिपदार्थः । सम्प्रज्ञातसाधारणं तु ध्यान इव गारुडोक्तं लक्षणम् । यथा— ध्याने द्वादशपर्यन्तं मनो ब्रह्मणि धारयेदिति । व्याख्याताभिप्रायम् ॥ ३ ॥

एतस्त्रितयस्य व्यवहारलाघवफलां संयम इति संज्ञामाह—

## त्रयमेकत्र संयमः ॥ ४ ॥

एकस्मिन् विषये त्रयं धारणाध्यानसमाधित्रितयं संयमशब्दार्थो भवतीत्यर्थः ॥ ४ ॥

संयमस्य फलमाह—

## तज्जयात् प्रज्ञालोकः ॥ ५ ॥

तज्जयेति ॥ संयमस्य जयात् स्थैर्यात् सात्म्यादिति यावत् । प्रज्ञाया ध्यातव्यविवेकस्वरूपाया आलोको दीप्तिर्वृद्धिः क्रमेण भवतीत्यर्थः । ध्यातव्यगोचरा प्रज्ञा अपरोक्षा भवतीति यावत् ॥ ५ ॥

संयमस्यानुष्ठाने विशेषमाह—

## तस्य भूमिषु विनियोगः ॥ ६ ॥

तस्येति ॥ तस्य संयमस्य स्थूलादिपूर्वपूर्वभूमिकाजयानन्तरं सूक्ष्मसूक्ष्मोत्तरभूमिकासु विनियोगो नियोजनं योगिना कर्तव्यमित्यर्थः । अधरामधरां जितां ज्ञात्वोत्तरस्यां भूमौ संयमः कार्य इति यावत् । तदुक्तं— योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्तते *

योऽप्रमत्तस्तु योगेन स योगे रमते चिरमिति ॥ ॥ ६ ॥

अष्टाङ्गेषु मध्ये त्रयाणामावश्यकत्वाऽवधारणार्थं पूर्वेभ्यस्त्रिभ्यवान्तरविशेषमाह—

## त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

पूर्वेभ्यो यमादिपञ्चभ्यः समाधिप्रतिबन्धकदुरितनिवर्तकेभ्यः । अत एव परम्परया समाधेरुपकारकहेतुर्बहिरङ्गभूतेभ्यस्त्रयं धारणाध्यानसमाधयः, अन्तरङ्गम् अङ्गिसमानविषयतया साक्षात् स्वरूपोपकारकमित्यर्थः । अतश्चैतत्त्रयाणामेवावश्यकत्वाद् यस्य जडभरतादेः स्वत एव प्राचीनकर्मणा चित्तं संयमयोग्यं तस्य नाऽस्तीतराङ्गावश्यकत्वमित्युक्तं पुराणेषु—

आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजननाः सर्वे विस्तराः परिकीर्त्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाऽभ्यासगौरवादित्यादिना ।

प्रसाधकाः प्रकृष्टहेतवः । कुतस्तत्राह । विलम्बेति । अत एव भगवद्गीतायां, मय्येव मन आधत्स्व मयि बुद्धिं निवेशय * निवसिष्यसि मय्येव अत ऊर्ध्वं न संशय, इत्युक्तम् । संयमं प्रत्यशक्तस्यैव, अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् * अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जयेत्यादिनाऽभ्यासादीनि कर्म्माणि विशेषत उपदिष्टानि । तस्माच्चलचित्तानां यमादिपञ्चकं वस्तुतो बहिरङ्गमप्यावश्यकतयाऽन्तरङ्गमेव । तत्राप्यसमर्थानां क्रियायोग इति स्पष्टम् ॥ ७ ॥

परवैराग्यद्वारा तस्य संयमस्य समाधिनिष्पादकत्वात् समाध्यन्तरापेक्षया तस्यापि बहिरङ्गत्वमित्याह—

## तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

तदपि धारणादित्रयमपि निर्बीजस्य समाधेः बहिरङ्गमेव साक्षादहेतुरेव । विवेकख्यातिपरवैराग्यद्वारैव तस्य हेतुत्वात् । अत एव येषां विदेहप्रकृतिलयानां देवविशेषाणामास्मिताफलज्ञानवैराग्याभ्यां स्वयमेवासम्प्रज्ञातो योगो भवति तेषां नास्ति संयमावश्यकत्वमित्युक्तं पुराणेषु— धारणादिविधिर्नैव जन्मसिद्धेषु सम्मतः * यतो ब्रह्मादयः सर्वे जन्मना सिद्धिमागताः, इत्यादिना ॥ ८ ॥

ननु त्रिगुणात्मकतया चलस्वभावचित्तस्य संयमादिसाध्यनिर्बीजसमाधौ कीदृशः कतिविधश्च परिणाम इत्यत आह ॥

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥

व्युत्थानेति ॥ क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं व्युत्थानम् । असम्प्रज्ञातापेक्षया सम्प्रज्ञातश्च निरोधः परवैराग्यं सम्प्रज्ञातो निरुध्यतेऽनेनेति व्युत्पत्तेः । ताभ्यां जनितौ यौ संस्कारौ तयोर्यथाक्रममभिभवप्रादुर्भावौ । अभिभवः क्षिप्तादित्रयस्य दाहः, संस्कारस्य तु ह्रासः । प्रादुर्भावो वर्तमानेऽध्वनि प्रकटतयाऽवस्थानम् । एतौ द्वौ क्रमेण वर्द्धितौ निरोधपरिणामः— निरोधकालीनः परिणामः । स च निरोधक्षणचित्तान्वयः । निरोधक्षणेषु कस्मिंश्चित् स्थिरे चित्तेऽन्वित इत्यर्थः । एतच्च विशेषणं योगकाले प्रतिक्षणं तादृशपरिणामाभावलाभाय, चित्तस्थैर्यलाभाय चेति संक्षेपः । अनेन धर्मपरिणामो लक्षणपरिणामश्चोक्तः । व्युत्थानत्यागेन निरोधसंस्काररूपधर्मस्य लाभात् । तस्य धर्मस्य वर्तमानावस्थाप्राप्तेश्च ॥ ९ ॥

ननु किमर्थं चित्तधर्मिणो धर्मपरिणामोऽयं निरोधसंस्कारो निरोधकाले कल्प्यते इत्याकाङ्क्षायां निरोधसंस्कारे प्रमाणमाह—

तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

तस्यां निरोधावस्थाचित्तस्य प्रशान्तवाहिता प्रशान्ततया निश्चलतया वाहिता प्रवाहपरिणामो निरोधसंस्कारबलान्निश्चलनिरोधधारया वहनं चित्तस्य भवतीति यावत् । अतो निरोधसंस्कारस्तत्प्रादुर्भावश्चावश्यमेवेष्टव्य इति भावः । अनेनावस्थापरिणाम उक्तः । संस्कारस्य बलवत्त्वावस्थालाभात् ॥ १० ॥

इदानीं सिद्धीः प्रदर्शयिष्यन् योगाङ्गसमाधिकार्यं परिणामं दर्शयति—

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥

सर्वार्थतावलवत्त्वाभानाविधार्थग्रहणरूपा विक्षिप्तता एकार्यंता एकमात्रविषयता तयोर्यथाक्रमं क्षयोदयौ निरुक्तप्रकारावभिभवप्रादुर्भावौ चित्तस्य योगाङ्गसमानकालीनः परिणाम इत्यर्थ ॥ ११ ॥

इदानीमङ्गसमाधावेव परिणामान्तरमुक्तपरिणामोत्तरकालीनमाह—

ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्त-
स्यैकाग्रतापरिणामः ॥ १२ ॥

ततः सर्वार्थताया निःशेषतः क्षये सति शान्तोदितौ, शान्तः अतीताध्वनि प्रविष्टः, उदितो वर्त्तमानेऽध्वनि स्फुरितः । एतौ ह्यतीतोत्पद्यमानौ तुल्यप्रत्ययौ एकवस्तुविषयकत्वेन सदृशौ प्रत्ययौ चित्तस्यैकाग्रताकालीनः पुनः परिणामो भवति । सजातीय एकैकः प्रत्ययो नश्यति, अन्योऽन्यश्चोत्पद्यत इत्येव परिणामो भवतीत्यर्थः । न च पूर्वेण गतार्थता । तत्र चित्तसमाधानरूपलक्षणपरिणामस्यैवोक्तत्वात् । अत्र तु धारावाहिकैकाग्रतासन्तानस्योक्तेर्न गतार्थतेति संक्षेपः ॥ १२ ॥

तदेवं योगतदङ्गतयोः परिणामवैलक्षण्यं तयोर्विवेकाय प्रदर्शितम् । अनयैव दिशा व्युत्थानकालीनानपि परिणामांश्चित्तस्य व्याचष्टे—

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा
व्याख्याताः ॥ १३ ॥

एतेन धर्मलक्षणावस्थाभेदेन त्रिविधपरिणामस्य प्रदर्शकसूत्रसन्दर्भेण भूतेन्द्रियेषु स्थूलसूक्ष्मभेदभिन्नभूतेषु ज्ञानकर्मान्तःकरणभेदेनावस्थितेष्विन्द्रियेषु च धर्मलक्षणावस्थापरिणामाः । अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरप्राप्तेर्धर्मपरिणामः । यथा मृदः पिण्डभावत्यागेन घटभावस्यानागतावस्थापरित्यागेन वर्त्तमानावस्थायाः, वर्त्तमानावस्थात्यागेनातीतावस्थायाश्च प्राप्तिर्लक्षणपरिणामः । प्रथमद्वितीयादिलक्षणयोः सम्बन्धेन भूतगत्यप्रार्थीनत्व-

रूपोऽवस्थापरिणामः । एते त्रयो धर्मलक्षणावस्थापरिणामा व्याख्याताः। चित्तस्येव भूतेन्द्रियाणां त्रिगुणात्मकतयाऽवस्थसमाधितया सूचिता । अयमत्र निष्कर्षः। स्थूलसूक्ष्मभेदेन भूतानि द्विविधानि। तत्र स्थूलानि वियत्पवनतेजोऽम्बुभुवः सूक्ष्माणि शब्दस्पर्शरूपरसगन्धतन्मात्राख्यानि तामसाहङ्कारोपादानकानि परस्परमतिविजातीयानि परस्परमहेतुकानि तेषां विपरिणामाः स्थूलाः। तत्र शब्दतन्मात्राख्यस्य परिणाम आकाशः, स्पर्शतन्मात्राख्यस्य वायुः, रूपतन्मात्राख्यस्य तेजः, रसतन्मात्राख्यस्य जलं, गन्धतन्मात्राख्यस्य पृथिवी। तन्मात्राख्याश्च स्थूलानां सूक्ष्मांशाः। स्थांशेभ्यः स्वस्योत्पत्तेः सम्भवात्। अतो नाकाशस्य वायुः, वायोस्तेजः, तेजसो जलं, जलस्य पृथिवी परिणामः। जातिसाङ्कर्यप्रसङ्गतो विजातीयानां विजातीयपरिणामत्वायोगात्। ननु तस्मादाकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवीत्याद्यनेकश्रुतिस्मृतिविरोध इतिचेन्न । तासां तेषामधिष्ठानकारणत्वाभिप्रायकत्वात् । अधिष्ठानकारणं च यत्राऽविभक्तं येनोपष्टम्भं च सदुपादानकारणं च कार्याकारेण परिणमते तत्। यथा सर्गादौ जलाऽविभक्ताः पृथिवीसूक्ष्मांशास्तन्मात्राख्या जलेनैवोपष्टम्भात् पृथिव्याकारेण परिणमन्ते। तद्वत्यन्तो जलं महापृथिव्या अधिष्ठानकारणम् । एवमाकाशादयो वाय्वादीनाम् । आत्मा च सर्वेषाम्। यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः * अधिष्ठानतया स्थित्वा सदैवोपकरोति हीति स्मृतेः । उपष्टम्भकत्वं च परमेश्वरस्य साक्षित्वेनैव। नच, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्युपादानत्वबोधकश्रुतिविरोध इति वाच्यम्। तस्या अपि कार्याविभागाधारत्वरूपोपादानत्वपरत्वात् । अविभागश्च दुग्धजलयोरिव सम्मिश्रणाख्यः सम्बन्धविशेषः । तथाच यत्र कार्यस्य साक्षादविभागस्तत्परिणामि कार्यम्।यथा तन्तवः पटस्य।यत्र तु कार्यस्य कारणाविभागेनाविभागस्तदधिष्ठानकारणम्। यथा जलं पृथिव्या इति। ननु तर्हि तार्किकमतादविशेष इतिचेत् का नो हानि।तार्किकेन सहजात्या दोषाभावात्। सम्भवति कथञ्चिदप्यकवाक्यत्वे सर्वथाविरोधादेरस्याज्ञतामात्रत्वात्। तन्मते सूक्ष्मांशाः स्थूलानारम्भकाः। अवयवावयविनोश्च भेद एव। सम्बन्धश्च समवायः । एतन्मते तु सूक्ष्मांशाः स्थूलः,

परिणामिन. । तादात्म्यश्च सम्बन्ध इति मतविरोधस्य स्फुटत्वाच्च । अपिच तार्किकैः पृथिवीं प्रति जलस्य निमित्तकारणत्वमिति परिभाष्यते । अस्माभिस्तु समवाय्यसमवायिभ्यामुदासीननिमित्तकारणेभ्यश्च विलक्षणतया चतुर्थमाधारकारणमित्युच्यते । अवयवाऽविभागस्य निमित्तकारणेष्वदर्शनादित्यन्यत्र विस्तरः ॥ १३ ॥

ननु धर्मेभ्योऽतिरिक्तो धर्मी नानुभूयते यस्य धर्मादिपरिणामः स्यादिति बौद्धशङ्कायां धर्मेभ्यो विविच्य धर्मिणं लक्षयति—

**शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥**

शान्ताः कृतव्यापारा अतीताः, उदिताः कुर्वद्व्यापारा वर्त्तमानाः, अव्यपदेश्याः शक्तिरूपेणावस्थिताः कथितुमशक्या अनागताः । एतादृशेषु धर्मेष्वनुपातीति वर्त्तमानरूपेणानुगतो धर्मीत्यर्थः । अत्राऽव्यपदेश्यान्तं विशेषणं धर्मधर्मिणोर्भेदप्रदर्शनाय । तथाच वर्त्तमानत्वावर्तमानत्वरूपविरुद्धधर्माध्यासाद्धर्मिणो धर्मस्य च भेद इत्यर्थः। ननु वर्त्तमाने धर्मिणि कारणव्यापारात् पूर्वं धर्मादेरवर्त्तमानत्वे सत्कार्यवादबाधः स्यात् । कारणव्यापारेणासतः कार्यस्योत्पत्त्यङ्गीकारात् । नच कथञ्चिद्भिन्नत्वेऽपि शक्त्यात्मनावस्थितस्यात एव भिन्नस्य कारणेनाभिव्यक्तिरेव क्रियते, नोत्पत्तिरितो न सत्कार्यबाधप्रसङ्ग इति वाच्यम् । अभिव्यक्तेरपि जन्यत्वे सत्कार्यवादबाधः स्यात् । नित्यत्वे सदैवाभिव्यक्तिः स्यात् । तस्याप्यभिव्यक्त्यपेक्षायामनवस्थापत्तेश्चेतिचेन्न । धर्मिनिष्ठसत्त्वगुणस्यैव धर्माद्यभिव्यक्तित्वेनाऽभिव्यक्तेर्नित्यत्वेऽपि तमसा प्रतिबन्धत्वान्न व्यवहारोपयोगित्वम् । अभिव्यञ्जकसामग्र्योत्तेजकेन मणेरिव तमसः प्रतिबन्धाद् व्यवहारोपयोगित्वमिति सामग्र्या उत्तेजकत्वमात्राङ्गीकारात् सत्कार्यवादबाधायोगात् । तस्मात् सामग्र्या उत्पादकत्वपक्ष एव नैयायिकोक्तदोषावकाशो नोत्तेजकत्वपक्षेऽपि । अतस्तेषां दूषणप्रयासोऽन्येषां समाधानान्तरप्रयासश्च व्यर्थ एवेति सङ्क्षेपः ॥ १४ ॥

नन्वेकस्य धर्मिणः किमेक एव परिणामः ? उत बहव इत्याशङ्कायाम्, एक एव युक्तो लाघवाद्, बहुत्वपक्षे सहकारिभेदकल्पनागौरवादिति प्राप्ते फलभेददर्शनाद् बहुत्वमेव युक्तम् । बहुत्वे को हेतुस्तत्राह—

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

मृदि चूर्णपिण्डयोः पिण्डघटयोः पौर्वापर्यरूपक्रमस्यान्यत्वं दृश्यमानमेकस्या एव मृदः परिणामानां चूर्णादीनां धर्माणाम् अन्यत्वे नानाविधत्वे हेतु कारणं लिङ्गमित्यर्थः । क्रियाभेदादेकस्य धर्मिणो नानाविधाः क्रिया परिणामा भवन्ति । क्रियाभेदज्ञानाच्च परिणामा भिन्ना इति च ज्ञानं भवतीति यावत् । एवं धर्मेऽपि लक्षणपरिणामावस्थापरिणामा अवगन्तव्या । सर्वेषां भावानां नियतेनैव क्रमेण परिणममानत्वात् । तत्र धर्मलक्षणपरिणामयो' प्रतिक्षणमनुत्पादेऽपि अवस्थापरिणामस्यास्ति प्रतिक्षणमुत्पत्तिः । नवस्य कालान्तरे पुराणतोपलम्भात् क्षणपरम्परापातिना प्रतिक्षणं भिन्न स्वरूपसत्ताक्रमसमूहेन विना पुराणताया अत्रासम्भवात् । अत सा प्रतिक्षणमवस्थापरिणाममनुमापयति । अत एव प्रतिक्षणभङ्गुरत्वेन प्रपञ्चस्य स्वप्नसाम्यं निश्चिन्वन्ति प्राज्ञा । तदुक्तं माण्डूक्ये—

स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणै, इति ॥

ननु स्वप्नतुल्यत्वं न युक्तम् । जाग्रद्दृश्यपदार्थानामिव स्वाप्निकानां सम्प्रयोजनत्वादर्शनात् । स्वाप्नभोजनादिना क्षुत्पिपासादिनिवृत्तेरभावादितिचेन्न । जागरितभोजनादिना स्वाप्नक्षुत्पिपासादेरप्रतिबन्धाज्जागरितसम्प्रयोजनताया स्वप्ने व्यभिचारेण साम्यस्याऽपरिहार्यत्वात् । तदुक्तं तत्रैव—

सम्प्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृता', इति ॥

इदमेव च तेषां मिथ्यात्वं यदुपभोगकालेऽप्यस्थिरत्वं ज्ञानोत्तरकाले चाऽसत्त्वम् । एतदभिप्रेत्यैव च तदेतत्त्रयं स्वप्नं मायामात्रमित्याद्या श्रुतिस्मृतयोऽपि स्वप्नमायात्वादिकं प्रतिपादयन्ति, न त्वात्यन्तिकं तुच्छत्वं ज्ञापयितुमिति सूत्रकारस्य गूढाभिसन्धिः ॥ १५ ॥

सम्प्रत्यापादपरिसमाप्ते संयमस्य सर्वविषयावश्यकत्वज्ञापनाय विभूतय उच्यन्ते । तत्रादौ परमेश्वरेण साम्यसम्पादिकां विभूतिमाह—

## परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥

परिणामत्रयेति ॥ अस्य धर्मिणोऽयं परिणामस्तस्य चायं लक्षणपरिणामोऽयमवस्थापरिणाम इत्येवं परिहृतविक्षेपतया अनुक्षणं यत्रचिदर्थे संयमात् तत्साक्षात्कारे सति तदितरार्थानामपि सर्वेषामतीतानागतवर्त्तमानानां साक्षात्कारो योगजन्यधर्मबलाद्योगिनः सङ्कल्पमात्रेण प्रणिधानलेशादेव भवतीत्यर्थः । अयं भावः । सत्त्वप्रधानतया सर्वार्थग्रहणे समर्थस्यान्तःकरणस्याविद्याविक्षेपकृतकुण्ठीभावनिरासद्वारा सर्वार्थज्ञाने संयमो हेतुरित्यर्थः । संयमस्याऽन्यविषयकत्वेऽपि न हानिः । योगमात्रस्य सकलप्रतिबन्धनिरासे सामर्थ्यादिति ॥ १६ ॥

सिद्ध्यन्तरमाह—

## शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ॥ १७ ॥

शब्दार्थेति ॥ शब्दो गौरित्येकं पदमित्येकत्वबुद्धिवेद्यवर्णेभ्योऽतिरिक्तोऽखण्डश्चरमवर्णप्रत्यक्षेणाभिव्यज्यमानः स्फोटः । आशुविनाशितया वर्णानां मिलनासम्भवेनार्थप्रत्यायकत्वायोगात्तस्यैवार्थस्य स्फुटीकरणात् । यद्वा स्फोटज्ञानेऽपि पूर्वपूर्ववर्णसंस्कारसहकृतचरमवर्णप्रत्यक्षस्यैव कारणत्वं वाच्यम् । तथाच तद्धेतोरेवास्तु किं तेनेति न्यायेनानुपूर्वीविशेषविशिष्टवर्णसमुदाय एव वा, अर्थो गौरित्यादिः सास्नादिमान् विषयः, प्रत्ययो गौरित्यादिव्यक्तिविषयकं ज्ञानम् । तेषाम् इतरेतराध्यासाद् अन्योन्यमभेदाध्यासात् सङ्करो विवेकाऽग्रहणं भवति । वस्तुतस्तु तेषां भेदोऽस्ति । अतस्तेषां मनुष्यादियत्किञ्चिद्विषयाणामपि प्रविभागभेदे संयमात् साक्षात्कृते सति सर्वभूतानां रुतानि ज्ञायन्ते । अयं काकादिरिममर्थम् । एवं प्रतीत्या अनेन शब्देन कथयतीत्येवमित्यर्थः । यद्यपि, साक्षात्कृते सतीति सूत्रे नास्ति, तथापि, संस्कारसाक्षात्करणादित्यागामिसूत्रेण साक्षात्कारपर्यन्तानां संयमस्य व्याख्यास्यति । अस्मदादीनां च शब्दार्थप्रत्ययभेदसाक्षात्कारे सत्यपि तस्य साक्षात्कारस्य संयमाजन्यत्वान्न सर्वभूतरुतज्ञानं भवति । योगजधर्मस्यैव तादृशसामर्थ्यादिति दिक् ॥ १८ ॥

सिद्ध्यन्तरमाह—

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ॥ १८ ॥

संस्कारेति ॥ विविधाश्चित्तस्यानुभवक्लेशजाः स्मृतिक्लेशहेतवः संस्काराः, केचित् कर्मजात्यायुर्भोगफलाः पूर्वजन्मपरम्परासञ्चिताः। तेषां श्रुतानुमितानां संयमेन साक्षात्काराद् पूर्वजातीनां ज्ञानं भवतीत्यर्थः। जन्मभूमिरूपदेशस्य युगादिरूपकालस्य मातापित्रादिरूपनिमित्तस्य चेदानीमत्रामुकपुत्रोऽहमित्यनुभवजन्यानादिसंस्कारविषयत्वात् संस्कारसाक्षात्कारे देशकालनिमित्तादिरूपाशेषविशिष्टानां पूर्वजन्मनामपि साक्षात्कारो भवतीतियावत् । अत्र भगवान् जैगीषव्य उदाहरणम् । तथाहि । भगवानावट्यो जैगीषव्यं प्रत्युवाच । संस्कारसाक्षात्करणेन दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमनुभूतमिति । अथ जैगीषव्य उवाच । दशस्वपि महासर्गेषु सुखदुःखयोर्मध्ये दुःखमेवाधिकमनुभूतमिति । आवट्य आह । किं प्रधानवशित्वमनुत्तमसुखमपि दुःखपक्ष एव निक्षिप्तमिति । जैगीषव्यः प्राह । कः संदेहः विषयसुखापेक्षयैवानुत्तमं, न तु कैवल्यापेक्षया । त्रिगुणात्मकस्य प्रत्ययस्य हेयत्वादिति ॥ १८ ॥

सिद्ध्यन्तरमाह—

प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

प्रत्ययस्येति ॥ प्रत्ययस्य रागादिमत्या स्वीयचित्तवृत्तेः संयमेनाऽऽश्रयादिरूपाशेषविशेषैः साक्षात्कृताच्चित्तात् परचित्तज्ञानं परस्य भिन्नस्य चित्तान्तरस्याप्यशेषविशेषतः साक्षात्कारः संकल्पमात्रेण भवतीत्यर्थः। केचित्तु सुखादिना लिङ्गेन परस्य चित्तस्य संयमेन परचित्तज्ञानमिति वदन्ति । तन्न युक्तम् । समानविषयत्वेनैव संयमाऽनुभवयोः कार्यकारणभावे अदृष्टाश्रुतामतगोचरप्रत्यक्षं न स्यात् । तस्मात् । सजातीयसंयमत्वादिनैव हेतुहेतुमद्भावो युक्तः । अतः स्वीयचित्तवृत्तिसंयमादपि तत्सम्भवे परानुसरणप्रयासो व्यर्थ इति दिक् ॥ १९ ॥

अस्यैव परचित्तज्ञानस्य विशेषमाह—

न च तत्सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥

तत् परचित्तज्ञानं नीलविषयं पीतविषयमिति सालम्बनं नियमेन न भवति । तस्य परचित्तालम्बनस्य संयमविषयेण स्वचित्तेनाऽविषयीकरणादित्यर्थ । किमनेनालम्बितमिति प्रणिधाने तु भवत्येव तस्यापि ज्ञानं प्रणिधानविशेषमाहात्म्यादिति संक्षेप. ॥ २० ॥

सिद्धान्तरमाह—

कायरूपसंयमाद् ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशाऽसम्प्रयोगेऽन्तर्द्धानम् ॥ २१ ॥

कायस्य यद्रूपं चाक्षुषत्वप्रयोजकमस्ति तस्मिन् संयमात्तस्य रूपस्य तद्ग्राह्यशक्तिस्तम्भे परचक्षु संयोगयोग्यतारूपस्य दृश्यताशक्तिप्रतिबन्धे सति चक्षु प्रकाशासंयोगे परचक्षु किरणैरसंप्रयोगेऽन्तर्द्धानं योगिदेहस्याचाक्षुषत्वं यथावकाशमुत्पद्यते। दिवान्धेनेव केनाप्यसौ न दृश्यत इत्यर्थ । एतेन स्वीयशब्दादिसंयमाच्छ्रोत्राद्यऽग्राह्यत्वसिद्धिरुक्ता वेदितव्येति संक्षेप. ॥ २१ ॥

सिद्धान्तरमाह—

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२

पूर्वजन्मकृतमिदानीमास्थितं कर्म द्विविधं सोपक्रमं निरुपक्रमं च। तत्र सोपक्रमं फलदानव्यापारयुक्तम् । निरुपक्रमं कालान्तरे फलप्रदम् । तस्मिन् द्विविधे कर्मणि किं कर्म शीघ्रविपाकं किं वा चिरविपाकमिति संयमात् साक्षात्कृतेऽपरान्तशब्दितस्य मरणस्य ज्ञानम् । अमुष्मिन् देशे काले चानेन प्रकारेणामुकहेतुना भविष्यतीत्येव भवतीत्यर्थ । प्रसङ्गादयोगिनोऽप्याह ॥ अरिष्टेभ्योवेति ॥ अरिष्टं त्रिविधम् । आध्यात्मिकम् आधिभौतिकम् आधिदैविकं च । तत्राऽऽध्यात्मिकं च विपरीतोऽसुसञ्चार, पिहितकर्णस्य नादाश्रवणादिकं च। आधिभौतिकं च अकस्माद्विकृतपुरुषदर्शनादि । आधिदैविकम्

अकाण्ड एवात्रायोग्यस्वर्गादिदर्शनम् । उक्तानि स्कान्दे—

घ्राणनासापुटे यस्य वायुर्याति दिवानिशम् ।
अखण्डमेकं तस्यायुर्नश्यत्यब्दत्रयेण हि ॥
द्व्यहोरात्रं त्र्यहोरात्रं रविर्वहति सन्ततम् ।
आद्ब्येकवर्षं तस्येह जीविताबधिरुच्यते ॥
वहेन्नासापुटद्युग्मं दशाहानि निरन्तरम् ।
वायुश्चेत् प्रतिसंक्रान्तिं तदा जीवेद्दतुत्रयम् ॥
अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च ।
आसन्नमृत्युर्नेक्षेत चतुर्थं मातृमण्डलम् ॥
अरुन्धती भवेज्जिह्वा ध्रुवो नासाग्रमुच्यते ।
विष्णोः पदं भ्रुवोर्मध्यं नेत्रयोर्मातृमण्डलम् ॥
वेत्ति नीलादिवर्णस्य कट्वम्लादिरसस्य च ।
अकस्मादन्यथाभावं षण्मासेन स मृत्युभाक् ॥
षण्मासमृत्योर्मर्त्यस्य कण्ठोष्ठरसनापुटाः ।
शुष्यन्ति सततं तद्वत् सजिह्वातालुपञ्चमाः ॥
रेतःकरजनेत्रान्तं नीलिमानं भजन्ति चेत् ।
तर्हि कीनाशनगरीं षष्ठे मासि व्रजेन्नरः ॥
द्रुतमारुह्य सरटस्त्रिवर्णो यस्य मस्तकम् ।
प्रयाति याति तस्यायुः षण्मासे परिसंक्षयम् ॥
सुस्नातस्यापि यस्याशु हृदयं परिशुष्यति ।
चरणौ च करौ चापि त्रिमासं तस्य जीवितम् ॥
छाया प्रकम्पते यस्य देहबन्धेऽपि निश्चले ।
कृतान्तदूता बध्नन्ति चतुर्थे मासि तं नरम् ॥
यस्य वीर्यं मलं मूत्रं क्षुतं सद्यः पतेदिह ।
एकवर्षं भवेद्वर्षं जीवितं तस्य निश्चितम् ॥
इन्द्रनीलनिभं व्योम्नि नागवृन्दं य ईक्षते ।
इतस्ततः प्रचलितं षण्मासं स तु जीवति ॥
मतिभ्रंशे यस्य स्थलेऽम्भाणी धनुरैन्द्रं निरीक्षते ।
रात्रौ चन्द्रद्वयं चापि दिवा च द्वौ दिवाकरौ ॥
दिवा सतारकाचन्द्रं रात्रौ व्योमवितारकम् ।
युगपच्च चतुर्दिक्षु शार्ङ्गं कोदण्डमण्डलम् ॥

भूरहे भूधराग्रे वा गन्धर्वनगरालयम् ।
दिवा पिशाचनृत्यं च ह्येते पञ्चत्वहेतवः ॥
सर्वेष्वेतेषु चिह्नेषु यद्येकमभिवीक्षते ।
तदा मासावधि मृत्युं प्रतीक्षेत नचाधिकम् ॥
अकस्माद्वीक्षते यस्तु पुरुषं कृष्णपिङ्गलम् ।
तस्मिन्नेव क्षणे रूपं स जीवेद् वत्सरद्वयम् ॥
भेक्ष्यते भक्ष्यते यो हि पिशाचासुरवायसैः ।
भूतैः प्रेतैः श्वभिर्गृध्रैर्गोमायुखरशूकरैः ॥
शरभैः करभैः कीरैः श्येनैरन्यैश्च जन्तुभिः ।
स्वप्ने स जीवितं त्यक्त्वा वर्षान्ते यममीक्षते ॥
गन्धपुष्पांशुकैः शोणैः स्वां तनुं भूषितां नरः ।
य पश्येत् स्वप्नसमये सोऽपि मासांस्तु जीवति ॥
पांशुराशिं च वल्मीकं यूप दण्डमथापि वा ।
योऽधिरोहति वै स्वप्ने स षष्ठे मासि नश्यति ॥
रासभारूढमात्मानं तैलाभ्यक्तं च मुण्डितम् ।
नीयमानं यमाशायां यः पश्येत् स च पूर्ववत् ॥
स्वमौलौ स्वस्तनौ वाऽपि य. पश्येत् स्वप्नगो नरः ।
तृणानि शुष्ककाष्ठानि षष्ठे मासि स नश्यति ॥
लोहदण्डधरं कृष्णं पुरुषं कृष्णवाससम् ।
स्वप्ने योऽग्रे स्थितं पश्येत स त्रीन् मासान्न लङ्घयेत् ॥
काली कुमारी यं स्वप्ने बन्धीयाद् बाहुपाशकैः ।
स मासेन समीक्षेत नगरीं शमनोषिताम् ॥
नरो यो वानरारूढो यायात् प्राचीं दिशं स्वपन् ।
दिनैः पञ्चदशैरेव पश्येत् सयमनीं पुरीम् ॥
कृपणोऽपि वदान्यः स्याद् वदान्य कृपणो यदि ।
प्रकृतेर्विकृतिश्च स्यात्तदा पञ्चत्वमृच्छति ॥
मार्कण्डेये—
अरश्मिबिम्बे सूर्यं च विम्बं सूर्यांशुमालिनम् ।
दृष्ट्वैकादश मासांस्तु नरो वर्षं न जीवति ॥
चरेन्मूत्रं पुरीषं च यः स्वर्णं रजतं तथा ।
प्रत्यक्षमथवा स्वप्ने जीवित दशमासिकम् ॥

दृष्ट्वा प्रेतपिशाचानां गन्धर्वनगराणि च ।
सुवर्णवर्णवृक्षांश्च नव मासान् स जीवति ॥
स्थूलः कृशः कृशः स्थूलो योऽकस्मादेव जायते ।
प्रकृतेश्च निवर्तेत तस्यायुश्चाष्टमासिकम् ॥
कपोतो गृध्रकाकोलौ वायसो वापि मूर्द्धनि ।
क्रव्यादो वा खगस्तिष्ठेत् षण्मासायुःप्रदर्शकः ॥
हन्यते काकपङ्क्तिभिः पांशुवर्षेण वा नरः ।
शुष्येच्च वै यस्य मर्म स्नानाद्धामाद्धस्तनम् ।
तस्यापि पञ्चभिर्मासैर्विद्यान्मृत्युमुपस्थितम् ॥
घृते तैले तथाऽऽदर्शे तोये चाऽप्यात्मनस्तनुम् ।
यः पश्येदशिरस्कां वा मासादूर्ध्वं न जीवति ॥
रक्तकृष्णाम्बरधरा गायन्ती हसती च यम् ।
दक्षिणाशां नयेन्नारी स्वप्ने सोऽपि न जीवति ॥
नग्नं क्षपणकं स्वप्ने हसमानं महाबलम् ।
एतं चाऽऽवीक्ष्य वल्गन्तं विद्यान्मृत्युमुपस्थितम् ॥
आमस्तकतलं यस्तु निमग्नं पङ्कसागरे ।
स्वप्ने पश्यत्यथात्मानं स सद्यो म्रियते नरः ॥
केशाङ्गारांस्तथा भस्म भुजङ्गं निर्जलां नदीम् ।
दृष्ट्वा स्वप्ने दशाहात्तु मृत्युरेकादशेऽहनि ॥
करालैर्विकटैः कृष्णैः पुरुषैरुद्यदायुधैः ।
पाषाणैस्ताडितः स्वप्ने सद्यो मृत्युमवाप्नुयात् ॥
सूर्योदये यस्य शिवाः क्रोशन्त्यायान्ति संमुखम् ।
विपरीत्यापरीत्या च स सद्योमृत्युमृच्छति ॥
यस्य वै भुक्तमात्रस्य हृदये बाधते क्षुधा ।
जायन्ते दन्तघर्षाश्च स गतायुर्न संशयः ॥
दीपादिगन्धं नो वेत्ति त्रस्यत्यपि तथा दिवि ।
नात्मानं परनेत्रस्थं वीक्षते न स जीवति ॥
पिधाय कर्णौ निर्घोषं न शृणोत्यात्मसम्भवम् ।
नश्यते चाक्ष्णोर्ज्योतिर्यस्य सोऽपि न जीवति ॥
स्वप्नेऽग्निं प्रविशेद्यस्तु न च निष्क्रमते पुनः ।
जलप्रवेशादपि वा तदन्तं तस्य जीवितम् ॥

उष्ट्ररासभयानेन यः स्वप्ने दक्षिणां दिशम् ।
प्रयाति तं विजानीयात् सद्योमृत्युं नरेश्वर ॥
स्ववस्त्रममलं शुक्लं रक्तं पश्यत्यथाऽसितम् ।
यः पुमान् मृत्युमासन्नं तस्यापि हि विनिर्दिशेत् ॥
वैश्वाऽऽविभीतः सततं येऽस्य पूज्यतमा मताः ।
तानेव चावजानाति तानेव च विनिन्दति ॥
देवान्नार्चयते वृद्धान् गुरून् विप्रांश्च निन्दति ।
मातापित्रोरहङ्कारं योगिनां च महात्मनाम् ॥
प्राप्ते काले तु विदुषस्तद् विज्ञेयं विचक्षणैः ॥
एवमादीन्यरिष्टानि ज्ञात्वा प्राज्ञो मतिं हरौ ।
कुर्याच्चतो भवेत्तस्य जीवितं मुक्तिरेव वा ॥
उत्क्रान्तिकाले संस्मृत्य पुनर्योगित्वमृच्छति ।
अक्षीणकर्मबन्धश्च योगवासनया तदा ॥
तस्मादसिद्धयोगेन सिद्धयोगेन वा पुनः ।
ज्ञेयान्यरिष्टानि सदा येनोत्क्रान्तौ न सीदति ॥
दृष्ट्वारिष्टं तथा योगी त्यक्त्वा मरणजं भयम् ।
तत्स्वभावं तदाऽऽलोच्य योगं युञ्जीत तत्त्ववित् ॥
ततो मृत्युभयान्मुक्तो विहरेच्च यथासुखम्, इति ॥

अस्मादेव हेतोर्योगसिद्धिप्रस्तावेऽरिष्टेभ्यो वेति कथितम् । उपलक्षणमेतच्छायापुरुषदर्शनस्यापि । तद्दर्शनप्रकारश्चोक्तस्तन्त्रे—

आकाशे विगताम्बुदे निशि सिते पक्षे पुनः प्रत्यहं
भूमावापदमाललाटफलकं ह्येकाग्रचित्तश्चिरम् ।
प्रात पृष्ठगतेरवावनिमिष छायाङ्गलेखां चिरं
दृष्ट्वोर्ध्वं नयनेन यत् सिततरं छायानरं पश्यति ।
तत्कर्णास्यकरास्यपार्श्वहृदयाभावेक्षणेऽर्का १२ ऽश्व ७ दिग् १० भू १ रामाक्षिरसमा शिरो विगमतो मासांस्तु षड् जीवति ॥
हृद्रन्ध्रदृष्ट्या मुनिसंख्यमासान् द्विदृष्ट्या तु मृतिस्तदैव ॥
संपूर्णदृष्ट्या तु न वर्षमध्ये रोगो मृतिर्वेति वदन्ति सत्यम्, इति संक्षेप ॥ ॥ २२ ॥

सर्व्यायोगसाध्यां सिद्धिमाह—

## मैत्र्यादिषु बलानि ॥ २३ ॥

मैत्रीकरुणामुदितासु संयमाद् बलानि तासां मैत्र्यादीनामवन्ध्यानि वीर्याणि भवन्ति । येयोगी प्राणिमात्रस्य सुखकरः सुहृद्भवति । स्वस्य परस्य वा परेषु मैत्र्याद्यर्थं प्रयत्ननिरपेक्षो भवतीति यावत् । एवं करुणादिष्वपि बोध्यम् ॥ २३ ॥

लक्ष्ययोगसाध्यं सिद्धियोगमाह—

## बलेषु हस्तिबलानि ॥ २४ ॥

हस्त्यादिबलेषु संयमात्तानि बलानि योगिनः प्रादुर्भवन्ति । योगजधर्मस्याचिन्त्यप्रभावत्वाचेति भावः ॥ २४ ॥

शिवयोगसाध्यां सिद्धिमाह ॥ २५ ॥

## प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहित-विप्रकृष्टज्ञानम् ॥ २५ ॥

प्रवृत्तिर्ज्योतिष्मती प्रागुक्ता । तस्यां दृढायां य आलोकसात्त्विकप्रकाशप्रसरो बुद्धेस्तस्य न्यासाद् विषयेषु योजनात् कः कीदृश क कदेत्यादिप्रतिसन्धानरूपात् सूक्ष्मस्य परमाण्वादेर्व्यवहितस्य निध्यादेर्विप्रकृष्टस्य मेर्वन्तर्वर्तिनो रसायनादेर्ज्ञानमुत्पद्यते । यथा चक्षुर्न्यासेन घटादीनामपरोक्षं भवति तद्वदित्यर्थः । एतेन श्रुतिषूक्तमेकविज्ञानेन सर्वविज्ञानं व्याख्यातम् । आत्मविषयकसंयमे सिद्धे सर्वेष्वन्येषु संयमापेक्षा नास्ति । तत्र तत्र संयमं विनैव आत्मसंयममाहात्म्यादेव सर्वेषां ज्ञानोत्पत्तेः । ननु कोऽयमात्मन्युत्कर्षो, यत्संयमेन सर्वेषामेव ज्ञानमितिचेच्छृणु । जीवस्य स्वामित्वं परमेश्वरस्य च कारणत्वमुत्कर्षः । कारणता चास्योपष्टम्भकत्वेन । यथा पृथिवीं प्रति जलस्य । प्रकृते चोपष्टम्भकत्वं साक्षित्वप्रेरकत्वादिरूपं कारणत्वमेवाश्रित्य श्रुतिषु मृदादिदृष्टान्ता एकविज्ञाने दर्शिताः । तत्रापि संयमबलेनैव मृदादिज्ञानात् सर्वतत्कार्यापरोक्षसम्भवाद् मृद्विकारत्वेन ज्ञानं तु नोत्कर्षाधायकमिति संक्षेपः ॥ २५ ॥

संयमान्तरस्य सिद्धिमाह—

## भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥

सूर्ये ब्रह्मलोकमार्गभूते सूर्यमण्डलान्तादिच्छिद्ररूपे द्वारे संयमात् कथितप्रकारात् साक्षात्कृते सति भुवनज्ञानं भूर्भुवःस्वर्महर्जनस्तपःसत्यम् अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालं चेतिचतुर्दशभुवनानां साक्षात्कारो भवतीत्यर्थः । भुवनविस्तारो वर्णितः पुराणेषु । यथा—

भूरादिसत्यान्तान्युपरितनानि, अतलादिपातालान्तान्यधस्तनानि।तत्रोपरितनानां सर्वेषामधस्तनं भूमिः। जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यैः सप्तद्वीपैर्युक्तो भूर्लोको मेरुपृष्ठपर्यन्तं यस्य चतुराशीतिजनोच्छ्रायो मूर्ध्नि द्वात्रिंशत्सहस्रयोजनविस्तारो मूले षोडशसाहस्रयोजनविस्तारः सुमेरुर्मध्ये सौवर्णः पर्वतराज । तस्य पूर्वादिप्रदक्षिणक्रमेण राजतवैदूर्यस्फाटिकहेममणिमयानि शृङ्गाणि । दक्षिणपार्श्वेचास्य जम्बूनामा वृक्षो यन्नाम्नायं लवणोदधिवेष्टितो भूमिभागो जम्बूद्वीपनामा भवति । तस्य सुमेरोः सूर्येण निरन्तरं प्रदक्षिणीकरणादवच्छेदभेदेन रात्रिन्दिवं लग्नमिव वर्त्ततेतथा तस्य मेरोरुत्तरदिशि नीलश्वेतशृङ्गवन्तस्त्रयः पर्वताः प्रत्येकं द्विसहस्रयोजनविस्ताराः । तत्र नीले वैदूर्यमये व्रह्मपंय । श्वेते राजतमये देवासुराः शृङ्गवति हेमरत्नादिमये देवा एव सुरललनाभिः सह निवसन्ति। तेषां पर्वतानामन्तरालेषु रमणकं हिरण्मयम् उत्तराः कुरव इति त्रीणि वर्षाणि प्रत्येकं नवयोजनसहस्रविस्ताराणि सन्ति।तत्रोत्तरकुरुषु सर्वकामफला वृक्षाः मणिमयी सुखस्पर्शा काञ्चनमयवालुकावती भूमिः देवलोकच्युता देवकल्पास्त्रयोदशसहस्रवर्षायुषः सुरललनाकल्पाभिः सह विहरन्ति हिरण्मये यक्षानुगा मायाबलाः सदोत्सवमानसाः प्रियदर्शना एकादशसहस्रायुषो हिरण्मय्यां स्वानुरूपाभिर्ललनाभिः सह विहरन्ति । रमणके सत्कर्मपुञ्जोपार्जितविग्रहाः श्रुताभिजनसम्पन्नाः सुप्रियदर्शना निःसपत्ना द्वादशवर्षसहस्रायुषो मानवा नानाभोगैर्विहरन्ति। एव मेरोः पूर्वदिशि माल्यवान् पर्वतस्तमेव सीमानं कृत्वा समुद्रपर्यन्ते भद्राश्वनामको देशस्तन्नामकमेवैकं वर्षम् । तत्र माल्यवति वालखिल्यादिप्रभृतयो मुनीन्द्राः सिद्धाश्चोर्ध्वरेतस्का अहरहः सूर्यस्याभिमुखं गच्छन्तो निवसन्ति। भद्राश्वे महाबलास्तेजसा सम्पन्नाः श्वेताः पुरुषा दशवर्षसहस्रायुषो नृत्यगीतवादित्रकुशलाभिः कुसुमवर्णाभिश्चन्द्रप्रभाभिश्च ललनाभिः सह सिद्धचारणसेविते विशाल-

घनादौ विहरन्ति । एवं मेरोः पश्चिमदिशि गन्धमादनः पर्वतस्तमेव सीमानं कृत्वा केतुमालनामका देशास्तन्नामकमेवैकं वर्षम् । तत्र गन्धमादने सानुगो यक्षराजः कुबेरोऽनुदिनं सुरललनाभिः सह हासगानाऽऽदिना विहरति । केतुमाले सुवर्णवर्णाऽऽभा अनामया वीतशोका दशवर्षसहस्रायुषः स्वकर्मगा तत्र जातविग्रहा मानवा अप्सरसोपमाभिर्ललनाभिः सह विहरन्ति । एवं तस्य मेरोर्दक्षिणदिशि निषधहेमकूटहिमशैलास्त्रयः पर्वताः प्रत्येकं द्विसहस्रयोजनविस्ताराः । तत्र निषधे सर्पनागगन्धर्वप्रभृतयो निवसन्ति । हेमकूटे गुह्यका हिमवति रक्षांसि निवसन्ति । तेषां पर्वतानामवकाशेषु हरिवर्षं किम्पुरुषं भारतमिति त्रीणि वर्षाणि प्रत्येकं नवयोजनसहस्रविस्ताराणि सन्ति । तत्र हरिवर्षे महादानुयायिनो दैत्यदानवाः श्रीनृसिंहादिना विविधानन्दाननुभवन्तो निवसन्ति । किम्पुरुषे किम्पुरुषगन्धर्वादिभिः सह हनुमत्प्रभृतयो नानापुराणेतिहासादिभिः श्रीरामं गायन्तो दिव्योद्याननद्यादिषु विहरन्ति । भारतेवर्षे स्वर्गनरकमोक्षाधिकारिणो मनुष्या विविधजातिभेदभिन्ना गङ्गायमुनासरस्वतीसरयूनर्मदागोदावरीकावेरीमहानदीगण्डकी-पयोह्णादिनी-जलपानस्नानादिनात्मनः कृतकृत्यतां सम्पादयन्तो विन्ध्यचित्रकूटकालञ्जरकामगिरिगोवर्द्धनरैवतकमलयश्रीशैलसह्याद्रिपुमगवद्धक्त्याऽऽनन्दाऽनुभवेन कैवल्यपदमपि तृणीकुर्वन्तः सञ्चरन्ति महापुरुषाः ॥ एवं विविधदुराशयाः कामक्रोधलोभहिंसासूयामदमात्सर्यादिभिरात्मनो वक्ष्यमाणाऽनेक—नरक—भागितां संपादयन्तो दुरात्मानः कुललनाभिः क्षणभङ्गुराभिः सह विहरन्ति वाञ्छन्ति च । तेषां मोक्षो दुर्लभः । तस्माद्भारत वर्षे श्रेष्ठतमं वर्णयन्ति धर्माधर्मव्यवस्थायाः सत्त्वादिति दिक् ॥

सुमेरोरधोभागेऽष्टादशसहस्रयोजनविस्तृतं नवममिलावृतं वर्षम् । तत्र च भवानीनाथाः स्त्रीगणा एव विहरन्ति । तत्र च सोमः पूर्णः । चतुर्दिशं मेरोरवष्टम्भगिरिषु मन्दर मेरुमन्दर सुपार्श्वकुमुदाख्येषु पयोमधुइक्षुरसमिष्टजलह्रदान्वितेषु नन्दनचैत्ररथवैभ्राजकसर्वतोभद्राद्युपवनशोभितेषु वर्त्तमानविविधानेकवृक्षफललाभादिना सुखमनुभवन्ति । मेरोः पूर्वेण जठरदेवकूटौ, पश्चिमतः पवनपारियात्रौ, दक्षिणेन कैलासकरवीरौ, उत्तरतस्त्रिशृङ्गमकरौ । अष्टभिरेतैः

परितस्ततोऽग्निरिव परितश्चकास्ति काञ्चनगिरिर्मेरुः । तस्य शिरसि मनोवत्यमरावती तेजोवती संयमिनी कृष्णा अङ्गना श्रद्धावती महोदया यशोमती चेति नव पुरः । तत्र मध्यत उपक्लृप्ता भगवतः पुरी समचतुरस्रां यां शातकौम्भीं वदन्ति। अन्यानि महेन्द्रादिदिक्पालानां पुराणि । तत्र भगवतो विष्णोस्त्रिविक्रमस्य पराक्रमाद् ब्रह्माण्डं भित्वा निःसृता भगवच्चरणपङ्कजावनेजनारुणकिञ्जल्कोपरञ्जिताखिलजगदघमलापहोपस्पर्शनाऽमला गङ्गा भगवती स्वयं सीताऽलकनन्दा चक्षुर्भद्रेति चतुर्धा भिद्यमाना चतुर्दिशमभिस्पन्दती सागरं नदीपतिमभिनिविशति। तत्र सीता प्राच्यां,वंक्षुः प्रतीच्यां, भद्रा उत्तरस्याम्, अलकनन्दा भारते वर्षे हेमकूटादिमार्गेणागता जगत् पवित्रयति । यस्या नामग्रहणयाश्रदर्शनस्पर्शनप्रवेशमज्जनाम्बुपानादिभिः श्रवणमननध्यानविधुरा विविधविषयानुशया दुरात्मानोऽपि मोक्षभाजो भवन्ति । तदेवं सुमेरुमादाय जम्बूद्वीपाख्यं स्थानं शतसहस्रमितम् । ततः सुमेरोश्चतुर्दिक्षु पञ्चाशद्योजनसहस्रेण परिसंख्यातम् । तत्र जम्बूद्वीपः पार्श्वद्वयमादाय द्विगुणेन लवणोदधिना वेष्टितः । ततो द्विगुणः प्लक्षाख्यो द्वीपः । तत्र शिवं वयसं सुभद्रं शान्तं क्षेमम् अमृतम् अभयमिति वर्षाणि । तेषु मणिकूटो वज्रकूट इन्द्रसेनो ज्योतिष्मान् सुपर्णो हिरण्यष्ठीवो मेघमाल इति शैलाः। अरुणानृम्णाङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेत्येता नद्यः। यासां जलोपस्पर्शेन निवृत्तकल्मषाः सहस्रायुषो बहुप्रजाः सन्तः सूर्यमनुदिनं भजन्ते । स च पार्श्वद्वयस्वद्विगुणेन इक्षुरसोदधिना वेष्टितः प्लक्षद्विगुणः शाल्मलः स्वद्विगुणेन सुरोदधिना वृतः।तत्रापि सुरोचनं सौमनस्य रमणकं देववर्षं पारिभद्रम् आप्यायनम् अविज्ञातमिति सप्तवर्षाणि। शैलाश्च स्वरसः शतशृङ्गो वामदेवः कुन्दः कुमुदः पुष्पवर्षः सहस्रस्तुतिरिति सप्तैव । नद्यश्च अनुमतिः सिनीवाली सरस्वती कुहू रजनी नन्दा राकेति सप्त।तासां जलोपस्पर्शेन पुरुषाः उरुवीर्याः सोममनुदिनं भजन्ते।शाल्मलाद् द्विगुणः कुशद्वीपो घृतोदधिना पार्श्वद्वयमादाय स्वद्विगुणेन वेष्टितः । तत्रापि वसुवसुदानदृढरुचिनाभिगुप्तसत्यव्रतविविक्तनामदेवाख्यानि वर्षाणि सप्तैव । शैलाश्च चक्रश्चतुःशृङ्गः कपिलश्चित्र- कूटो देवानीकऊर्ध्वरोमा द्रविण इति सप्त । नद्यश्च घृतकुल्या रसकुल्या मधुकुल्या मित्रविन्दा देवगर्भा

घृतच्युता मन्त्रमालेति सप्त । यासां जैलस्तथाधीयांस्तृप्ताश्च भगवन्तं जातवेदस्वरूपिणं यजन्ते । कुशात् क्रौञ्चद्वीपो द्विगुणः पार्श्वद्वयमादाय स्वद्विगुणेन क्षीरोदधिना वेष्टितः । तत्रापि नामो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति वर्षाणि सप्तैव । शैलाश्च शुक्रो वर्द्धमानो भोजन उपबर्हणो नन्दो नन्दनः सर्वतोभद्रमिति सप्त । नद्यश्च अभया अमृतौघा आर्यका तीर्थवती रूपवती पवित्रवती शुक्लेति सप्तैव । यासां जलैरक्तवीर्याः पुरुषाः वरुणमेव भजन्ते । क्रौञ्चद्वीपाद् द्विगुणः शाकद्वीपः पार्श्वद्वयमादाय दधिमण्डो दधिना परीतस्तत्रापि पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारानामभिः प्रसिद्धानि वर्षाणि सप्तैव । शैलाश्च ईशान उरुशृङ्गो बलभद्रः शतकेशरः सहस्रस्रोतो देवपालो महानस इति सप्तैवानद्यश्च अनघा आयुर्दा उभयस्पृष्टिरपराजिता पञ्चपदी सहस्रस्तुतिर्निजधृतिः सप्तैव । तद्वर्षपुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानः प्राणं समाधिना यजन्ते । शाकद्वीपाद् द्विगुणः पुष्करद्वीपः पार्श्वद्वयमादाय द्विगुणेन स्वादूदकेन परीतः । तस्मिन् द्वीपे मानसोत्तरनामक एवाचलोऽयुतयोजनोच्छ्रायायामोऽर्वाचीनपराचीनवर्षयोर्मर्यादाभूतस्तिष्ठति । यस्मिन् चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिन्द्रादीनाम् । तदुपरिष्टात् सूर्यरथस्य मेरुपरिभ्रमत संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति । तत्रत्या भगवन्तं ब्रह्माणं कर्मणा भजन्ते । एतेषु द्वीपेषु सहसिद्धाः सन्ति । क्षीरोदात् परतः सप्तलक्षोत्तरा सार्द्धकोटिपरिमिता भूः तत्रापि लोका सन्ति । अनन्तरं लोकालोकपर्वतः । तदुपरि दिक्पालगजाः सन्ति । ततो बहिरुर्वरिता काञ्चनमय्यलौकिकीदेवक्रीडाभूमिः । सेयं वसुमती भूमिः सर्वापि पञ्चाशद्योजनकोटिपरिमिता आवरणेन शतकोटिविस्तृता अण्डस्य मध्ये संक्षिप्ता । भूर्लोकस्य सर्वाधस्तात् पातालं तत्र वासुकिप्रभृतयो नागाधिपतयः सपरिवारा निवसन्तितदुपरि रसातलम् । तत्र दैतेयदानवनिवातकवचप्रभृतयो निवसन्ति । तदुपरि महातलम् । तत्र तक्षकप्रभृतयो निवसन्ति । तदुपरि तलातलम् । तत्र मयो मायावी तदनुगाश्च तिष्ठन्ति । तदुपरि सुतलम् । तत्र भगवता स्वीयत्वेनानुगृहीतो बलिरात्मनिवेदी परमभागवतः सगणास्तिष्ठति ॥

तदुपरि वितलम् । तत्र हाटकेश्वरो भवान्या सह मिथुनी भूय विहरति । यतः प्रवृत्ता हाटकी नाम नदी । एवं तत्र तदीया भूतप्रेतपिशाचापस्मारब्रह्मराक्षसकूष्माण्डविनायकादयो निवसन्ति । तदुपरि अतलम् । यत्र मयपुत्रादयोऽसुरा निवसन्ति । तत्र ते सप्तपाताललोकाः स्वर्गादप्यधिकसुखसाधनाः । एतेषामुपरि जलावरणः ॥

तदुपरि भूमेरधस्ताद् विविधदुःखमयास्तामिस्रान्धतामिस्ररौरवकुम्भीपाककालसूत्रासिपत्रवनसूकरमुखाऽन्धकूपकृमिभोजनसन्दंशतप्तभूमिवज्रकण्टकशाल्मलीवैतरणीपूयोदप्राणरोधविशसनलालाभक्षणसारमेयादनमवीचिरयःपानक्षारकर्दमरक्षोगणभोजनशूलप्रोतदन्दशूकावटनिरोधनपर्यावर्त्तनसूचिमुखप्रभृतयो नरकाः सन्ति । तेषु च परवित्तकलत्रापहारकपरवञ्चकभूतद्रोहकुटुम्बादिपोषकदेहम्भरपशुपक्षिप्राणपीडकपितृगुर्वादिविद्वेषकपाखण्डधर्मपोषकवृथादण्डप्रदविवेकिमत्कुणाभिघातकस्वयमेवमिष्टान्नभुजो बलात्कारेण परस्वाऽपहारकपरवधूरतधर्मनाशकवृषलीपतिमृगयासक्तदाम्भिकयाजकसवर्णभार्यागामिगरदाग्निदमिथ्यावादिसुरापायिविद्यादिमदूद्वेषिभूताद्विजकातिथिविद्वेषककृपणपिशुनगणिकागामिविपरीतधर्माचारिधर्मान्तराभिरुचिप्रभृतयो नानाविधयातनाभिर्यात्यमाना हाहेति रुदन्तो वसन्ति । तदुपरि इयं वर्णिता भूमिः । एतस्या उपर्यन्तरिक्षाऽपरपर्यायो भुवर्लोकः । तत्र ग्रहनक्षत्रतारका ज्योतिश्चक्रे निबद्धाः सञ्चरन्ति ॥

ननु मेरोरुपरि भुवर्लोकः । तत्र ज्योतिश्चक्रं भ्रमतीति न युक्तम् । तथा सति मेरुणा ज्योतिश्चक्रावरणासम्भवादवच्छेदभेदेन रात्रिन्दिनभेदेन व्यवस्था न स्यादिति चेन्न । वृक्षेणेव पार्श्वान्तरेण मेरोरेकपार्श्वस्थसूर्यादेर्व्यवधानसम्भवेन रात्रिदिनव्यवस्थाया उपपत्तेः ॥

तदुपरि स्वर्लोको माहेन्द्रापरपर्यायः । तत्र षड् देवनिकायाः त्रिदशाः । अग्निष्वात्ताः याम्याः तुषिताः अपरिनिर्मितवशवर्त्तिनः परिनिर्मितवशवर्त्तिनश्चेति सर्वे सङ्कल्पसिद्धाः । अणिमाद्यैश्वर्योपपन्नाः स्वेच्छोपात्तविग्रहाः कल्पायुषः कामलम्पटा निवसन्ति । तदुपरि महर्लोके प्राजापत्या देवसमूहाः कुमुदा ऋभवाः प्रतर्दना अञ्जनाभा अमिताभा इति पञ्चविधा इत्येते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषो निवसन्ति । तदुपरि जनलोकः । तत्र भूतेन्द्रियवशिनो

ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अमरा इत्येते चतुर्विधा द्विगुणद्विगुणोत्तरोत्तरायुषो निवसन्ति । तदुपरि तपोलोकः । तत्राहङ्कारवशिनस्त्रिविधा देवनिकायाः अभास्वरा महाभास्वराः सत्यमहाभास्वरा इत्येते देवसमूहा द्विगुणद्विगुणोत्तरायुषः स्वेच्छया स्वपरान्यपरस्योपान्तचित्ताऊर्ध्वरेतसो निवसन्ति गच्छन्ति चातदुपरि सत्यलोकः । तत्राकृतगृहनिर्माणा आत्मारामाः प्रधानवशिनो यावत्सर्गायुषोऽच्युताः शुद्धनिवासाः सत्याभा संज्ञासंज्ञिनश्च क्रमेण सवितर्कसविचारानन्दास्मितायोगिन उपर्युपरि निवसन्ति गच्छन्ति च परमहंसास्तल्लोकवासिनः परोक्षविद्वांसः प्रणवाद्युपासकाश्च । ते च तत्र गतास्ततः पुनर्नावर्त्तन्ते । किन्तु तेनैव सहाधिकाराः सन्तो मुच्यन्ते वेदान्तविज्ञानसुनिश्चितार्थाःसंन्यासयोगाद्यतयःशुद्धसत्वाः * ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे इत्यादिश्रुतेरेतदेतत्सर्वं ब्रह्माण्डमध्ये संक्षिप्तं ब्रह्माण्डं च प्रधानस्याऽवयवो यथाकाशे खद्योतः । तदुक्तं विष्णुपुराणे प्रकृतिं प्रकृत्य—

अण्डानान्तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानां तथा तत्र कोटिकोटिशतानि चेति ॥

एतद्बहिश्च प्रकृत्यावरणम् । तत्र भवप्रलया असंप्रज्ञातयोगिनो निवसन्ति । उपायप्रत्ययास्तु कैवल्यपदे तिष्ठन्ति ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥

तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिन इत्यादि वदता भगवतापायप्रत्ययाऽसंप्रज्ञातयोगजप्रमाया एव कैवल्यहेतुत्वज्ञापनादिति संक्षेप ।ज्योतिःशास्त्रे तु पाञ्चभौतिको वर्त्तुलः कन्दुकाकारश्चन्द्रबुधशुक्रसूर्यमङ्गलबृहस्पतिशनिनक्षत्रकक्षावृतैर्वृत समन्ताद्देवमनुष्यदैत्यैः समेतः पर्वतारामग्रामचैत्यचयैः केसरैः कुसुम इव चितो नान्याधारः स्वशक्त्यैव पञ्चसहस्रयोजनपरिमित आकर्षणशक्तिमान् भूपिण्ड आकाशे नियतं तिष्ठति । आकाशे एव वर्त्तमानो भूपिण्डो निरन्तरमधो यातीति बौद्धाः । तन्न । ऊर्ध्वक्षिप्तशरादेर्भूप्राप्त्यनापत्तिप्रसङ्गात् । नच भूमेर्मन्दा शरादेश्च शीघ्रा गतिरिति वाच्यम् । गुरो शीघ्रपतनस्य लघोर्मन्दपतनस्यानुभवसिद्धत्वात् । ननु भूः सर्वैरपि समैवानुभूयते, न कन्दुकाकारेतिचेन्न । कन्दुके

पिपीलिकादेरिवादर्शकत्वात् सामग्र्यसम्भवात् । भूमध्ये देवानामिव मनुष्याणामपि सूर्यदर्शनापत्तिः । स्वर्णमयमेरुप्रतिबिम्बितसूर्येण रात्रिविलोपापत्तिः । उत्तरायाः प्राचीव्यवहारापत्तिश्चेत्यादयो दोषा आकरेदर्युद्धाविताः । अत्र भूगोलस्योत्तरार्द्धे जम्बूद्वीपः ।

तत्र भूमध्ये, लङ्का दक्षिणे, पूर्वे यमकोटिः, पश्चिमे रोमकः, अधः सिद्धपुरमिति पुरचतुष्टयम् । तेषामुत्तरे मेरुर्दक्षिणे वडवानलः । तेषु पुरेषु लङ्काया उत्तरतो हिमवान् गिरिः । तन्मध्ये भारतखण्डः । तदुत्तरे हेमकूटः । तन्मध्ये किन्नरखण्डः । तस्योत्तरे निषधस्तन्मध्ये हरिखण्डः । एवं सिद्धपुरादुत्तरः शृङ्गवान् पर्वतः । तन्मध्ये कुरुखण्डः ततः श्वेतगिरिः । तन्मध्ये हिरण्मयः खण्डः । ततो नीलगिरिः । तन्मध्ये रम्यखण्ड इति । अथ यमकोटेरुत्तरतो माल्यवान् गिरिःनिषधनीलपर्यन्तदैर्घ्यस्तस्य जलधेश्च मध्ये भद्राश्वखण्डः । एवं रोमकादुत्तरतो गन्धमादनः । तस्य जलधेश्च मध्ये केतुमालः खण्डः । एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवखण्डम् । सा स्वर्गभूमिः । तत्र मेरुः कनकरत्नमयः । तस्य शिखरत्रयम् । तेषु ब्रह्मविष्णुशिवपुराणि । शिखराणामधस्तादिन्द्रादयष्टलोकपालानां पुराणि । मेरोः पूर्वे मन्दरगिरौ कदम्बः केतुवृक्षश्चैत्ररथं वनमरुणोदं सरः । दक्षिणगन्धशैलगिरौ जम्बूकेतुवृक्षः नन्दनं वनं मानसं सरः । पश्चिमे विपुलशैले केतुवृक्षो वटो धृतिवनं महाह्रदं सरः । उत्तरे सुपार्श्वशैले पिप्पलः केतुवृक्षो वैभ्राजं वनं मानसं सरः । मेरौ विष्णुपदात्पतिता गङ्गा च चतुर्भिर्नामभिश्चतुर्धा याति । तत्र सीताख्या भद्राश्वम्, अलकनन्दा भारतं, चक्षुः केतुमालं, भद्रा चोत्तरान् कुरून् अखिलपावनाय याति । ऐन्द्रः १ कसेरुः २ ताम्रपर्णः ३ गभस्तिमान् ४ कुमारिकाखण्डः ५ नागः ६ सौम्यः ७ हिमवारुणः ८ गान्धर्व इति भारतखण्डेऽपि नवखण्डाः । तत्र वर्णाश्रमव्यवस्था कुमारिकाखण्ड एव । माहेन्द्रशुक्तिमलयर्क्षकपारियात्रसह्यविन्ध्य इति सप्तकुलाऽचलाः । भारतवर्षस्य लङ्कासमीपे कुमारिकाखण्डो भूर्लोकस्तस्मादुत्तरे भुवर्लोकः । मेरुः स्वर्लोकस्तत्रैवोत्तरोत्तरं महर्जनस्तपःसत्यमित्युत्तरार्द्धव्यवस्था । पूर्वार्द्धे च क्षारोदधेर्दक्षिणे शाकद्वीपः । ततो दुग्धसिन्धुर्यस्माद्रत्नानि । ततः शाल्मलीद्वीपस्ततो दधिसिन्धुस्ततः कुशद्वीपस्ततो घृतसिन्धुस्ततः क्रौञ्चद्वीपस्ततः इक्षुरससिन्धुस्ततो

गोमेदद्वीपस्ततो मेघसिन्धुस्ततः पुष्करद्वीपस्ततः स्वादूदकसिन्धुस्तदन्तर्वडवानलस्तन्निकटे नरकाणि पृथिवीपुटानि सप्त पातालानीति भुवनसङ्ख्या । सा पुराणविरुद्धेत्यत्र केचित् । मद्वचाद्विज्योतिःशास्त्ररीत्यैवानुभवात् पुराणमहत्त्वमुपासनापरम् । कोटिशब्दस्य नानार्थत्वाच्छतवाचकत्वं चेति समादधुरिति दिक् ॥ २६ ॥

पुराणमते संयमान्तरस्य सिद्धिमाह—

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

चन्द्रे संयमात् ताराणां नक्षत्रादिज्योतिषां यो व्यूहः सन्निवेशविशेषस्तस्य साक्षात्कारो भवतीत्यर्थः । सूर्यस्य नक्षत्राद्यभिभावकत्वात्तत्संयमात् साक्षात्कारकाले नक्षत्रादिज्ञानं कठिनमिति मत्वा पृथगुपाय कथित ॥ २७ ॥

नक्षत्रादिज्ञानफलमाह—

## ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

तारादिरूपज्ञानानन्तरं ध्रुवे निश्चले ज्योतिषां प्रधाने संयमात् तासां ताराणां या गतिः प्रत्येकं नियतकाला नियतदेशा च तस्याम् । इयं तारा अयं ग्रह इयति कालेऽमुकराशिं यास्यति इत्यादिसाक्षात्कारो भवतीत्यर्थः ॥ २८ ॥

बाह्यसिद्धीरुक्त्वान्तःसिद्धीराह—

## नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥

शरीरमध्यवर्तिनाभिकन्दरूपं चक्रं कदलीमूलवदाद्यावुत्पन्नं यतः शाखापल्लवादिवच्छिर पादाऽऽदिकमवयवजातम् ऊर्ध्वमधश्चाविर्भवति । तस्मिन्नाभिचक्रे संयमात् साक्षात्कृते सति कायस्य पदाऽर्धस्तमूढं रसमलधातुनाडीजीवानामवस्थानं सञ्चारं च जानाति । एतस्मिन् ज्ञाते जीवस्य देहान्तरे प्रवेशमपि जानातीत्यर्थः ॥ २९ ॥

संयमान्तरस्य सिद्धिमाह—

## कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

जिह्वाया अधस्ताज्जिह्वातन्तुः । ततोऽधस्तात् कण्ठः । कण्ठादधस्तात्

कूप इव कूपः पुर.पर्यन्तं कूपाकारश्छिद्रम्। तत्र संयमादशेषविशेषतः साक्षात्कृते सति क्षुत्पिपासानिवृत्तिर्भवतीत्यर्थः ॥ ३० ॥

संयमान्तरस्य सिद्धिमाह—

कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥

कण्ठकूपस्याधस्तादुरसि कुण्डलितसर्प इव स्थिततया कूर्माऽऽकारं हृदयपुण्डरीकाख्यं नाडीचक्रं कूर्मनाडीशब्दाभिधेयम्। तस्मिन् संयमाच्चित्तस्य स्थैर्यमचापल्यं सिद्धयतीत्यर्थः। यदिदं ब्रह्मपुरं दहरं पुण्डरीकं वेश्मेति श्रुत्या ब्रह्मवेश्मत्वेन प्रतिपादिते तस्मिन् प्रविष्टचित्तस्यानन्दविशेषलाभेन नान्यत्र मनो गच्छतीति भाव. ॥३१॥

संयमान्तरस्य सिद्धिमाह—

मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

ब्रह्मरन्ध्रस्थे स्वप्रकाशरूपे ज्योतिषि संयमात् सिद्धदर्शनम्। सिद्धानां द्यावापृथिव्योरन्तरालवर्तिनां दिव्यपुरुषाणां प्रमाणान्तरैरदृश्यमानानां दर्शनं साक्षात्कारो भवतीत्यर्थः ॥ ३२ ॥

सर्वज्ञत्वे उपायान्तरमाह—

प्रातिभाद्वा सर्वम् ॥ ३३ ॥

विवेकख्यातिर्हि प्रसंख्यानं संसारतरणोपायः। तदर्थं संयमे क्रियमाणे विवेकख्यातिसूचकं प्रातिभम् उपदेशानपेक्षेण यथार्थज्ञानशक्तिरूपप्रतिभोत्थमनौपदेशिकं ज्ञानं सर्वार्थविषयकं भवति। तज्ज्ञानबलात् पूर्वोक्तसूर्यादिसंयमान्तरं विनापि योगी सर्वं जानातीत्यर्थः। यथा- सूर्योदयसूचकारुणप्रभया लोकः सर्वं पश्यति ॥ ३३ ॥

संयमस्याऽऽन्तरसिद्धय उक्ताः। इदानीं सत्त्वपुरुषान्यताख्यातिरूपां मुख्यां सिद्धिं विवक्षुरादौ तत्संयमहेतुभूतायाश्चित्तसंविदः कारणमाह—

हृदये चित्तसंवित् ॥ ३४ ॥

हृदयं परमात्मसिंहासनकल्पं चित्तस्थानमधोमुखं हृत्पङ्कजम्।

तस्मिन् संयमात् सवासनस्य स्वपरचित्तस्य साक्षात्कारो भवतीत्यर्थः ॥ ३४ ॥

चित्ते साक्षात्कृते तद्विवेकेनात्मज्ञानं भवतीति क्रमानुसारेणाह—

## सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम् ॥ ३५ ॥

सत्त्वाधिक्यात् सत्त्वं बुद्धिः पुरुषो भोक्ता सच्चिद्रूपः पुष्करपलाशवन्निर्लेपः । अत एव तयोरत्यन्तासंकीर्णयोरत्यन्तभिन्नयोः सादृश्यादिनाप्यसंभावितभेदयोरिति यावत् । एतयोर्यः प्रत्ययाविवेकः प्रत्यययोर्विविच्याग्रहणं सुखादिमिति विषयाद्याकारा वृत्तिरन्तःकरणस्य । तत्र भासकांशः प्रत्ययः पुरुषस्येत्येव विशिष्य भास्यभासकभावेन पृथग्ग्रहणमिति यावत् । भोग असमासोऽधिकारस्यान्तःकरणस्य परिणामहेतुत्वाद्भोगः स्वस्यसाक्षित्वमात्राज्ञानेनाकृतार्थपुरुषस्याभिमानहेतुत्वाद्भोगः । अत एव तयोः सांकर्यमाध्यासिकाऽभेदः पुनः पुनः संसारसंपादकमतोऽस्तीति तयोर्मध्ये परार्थात् पुरुषभोगसंपादकादन्तःकरणविवेकेन स्वार्थे भासकरूपे साक्षिप्रत्यये संयमात् साक्षात्कृते सति परिपूर्णत्वादिधर्मः पुरुषस्याविप्लवः साक्षात्कारो भवतीत्यर्थः । यदनन्तरं द्वैतज्ञानं न पश्यति ॥ ३५ ॥

अस्यैव संयमस्य फलान्तरमाह—

## ततः प्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते ॥ ३६ ॥

ततः पुरुषसंयमात् प्रातिभं पूर्वोक्तमनौपदेशिकं श्रावणं श्रोत्रेन्द्रियजं, वेदना त्वगिन्द्रियजम्, आदर्शश्चाक्षुषम्, आस्वादो रासनं वार्त्ता घ्राणजम् । इमानि दिव्यशब्दस्पर्शरूपरसगन्धविषयकाणि ज्ञानान्यपि भवन्ति, न पुरुषज्ञानमात्रमित्यर्थः । एतेन विविदिषोर्लौकिकविषयानुभवार्थं । पृथक्कृतस्य योगोऽनावश्यकः पुरुषसंयमेनैव तत्सिद्धेरिति ज्ञापितम् ॥

अथवा पुरुषसाक्षात्कारस्य न सर्वपरोक्षज्ञानमात्रं फलं, किन्तु परोक्षमपरोक्षं चेति द्विविधमपि ज्ञानं भवतीत्याह ॥ तत प्रातिभेति ॥ तत पुरुषसाक्षात्कारात् प्रातिभं प्रतिभामात्रसहकारेण जातं परोक्ष

श्रावणं श्रोत्रेन्द्रियसहकारेण ज्ञातम् । एवं वेदनादिकमपि बोध्यम् । कृतात्मसाक्षात्कारस्य तत्तदर्थसाक्षात्कारार्थं भूतभौतिकानि प्रणिधानमात्रेणोपस्थितानि भवन्ति । एतेन योगिना या सिद्धिः सा सुतरां योगसाध्यब्रह्मापरोक्षप्रमावतो भवत्येवेति ज्ञापितम् । तथाच यस्येदं श्रुतिसिद्धं सर्वविज्ञानं स एवाऽपरोक्षप्रमावानिति निश्चीयते इति भावः ॥ ३६ ॥

ननु तर्ह्येवं योगी कृतकृत्यस्तत्राह—

## ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥

ते प्रातिभादयः फलविशेषाः समाधौ निःश्रेयसफले असम्प्रज्ञाने उपसर्गाः । हर्षविस्मयादिद्वारा शैथिल्यसम्पादनविघ्नरूपाः । अतो मुक्त्यर्थी तानुपेक्षेत । न ह्यात्मसाक्षात्कारं विना सिद्धिकोटिभिः कृतकृत्यता भवति । उक्तं च भगवता, एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेति । अत एव वसिष्ठ आह—

सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः ।
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते ॥
न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्त कुग्रामललना इव, इति ॥

तर्हि तत्साधननिरूपणं व्यर्थम् ? तत्राह ॥ व्युत्थाने इति ॥ व्युत्थाने व्यवहारदशायां सिद्धयः पुमर्थरूपा भवन्ति । अतस्तन्निरूपणं न व्यर्थम् ॥ ३७ ॥

तदेव ज्ञानादिरूपाः संयमसिद्धीः प्रदर्श्य क्रियारूपा अपि विभूतयः संयमफलान्याह—

## बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥

सर्वत्र व्यापिशीलस्य चित्तस्य स्वशरीरमात्रे संकोचेन स्थितिर्बन्धः । तस्य कारणं धर्माधर्मौ तयोः संयमेन शैथिल्यं दृढबन्धनाऽक्षमता भवति । प्रचारसंवेदनम् अपाननाड्या एवम्प्रकारेण चित्तं शरीरे प्रविशति निर्गच्छति चेत्यादिविशेषैश्चित्तगतिसाक्षात्कारो

भवति । तथाच बन्धकरज्जुनाशे मार्गज्ञस्य देशान्तर इव चित्तस्य योगिचित्तस्य परशरीरावेशः परकाये मृते जीविते वा प्रवेशो भवति प्रचारे ज्ञाते योगी स्वशरीरान्निष्कृष्य चित्तं शरीरान्तरे प्रक्षिपतीति यावत् । प्रक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति मधुकरराजमिव मक्षिकाः ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

द्वयी खल्विन्द्रियाणां प्रवृत्तिर्बाह्या आभ्यन्तरी च । आद्या रूपाद्यालोचनरूपा च । अन्या जीवनयोनियत्नरूपा सर्वकरणसाधारणी । तस्याः क्रियाभेदात् प्राणादिभिः संज्ञाभिर्व्यपदेशः । तत्र नासिकाग्राद्धृदयं स्थितः प्राणः । आनाभेरापादतलं मलापनयनादपान । नाभिप्रदेशं परिवेष्ट्य भुक्तस्य समनयनात् समानः । देहे व्यापनाद् व्यानः । आनासाद्याशिरोवृत्ति उदान उत्क्रान्तिहेतुः । तत्र उदानस्य संयमेन जयादितरेषां वायुनानिरोधादुदानमावाज्जले महानद्यादौ पङ्के कर्दमे कण्टकेषु च योगिनोऽतिलघुत्वात् तूलपिण्डवदसंसर्गो भवति । उत्क्रान्तिश्च स्वेच्छया मरणं च भवति लभते इत्यर्थः ॥ ३९ ॥

सिद्ध्यन्तरमाह—

समानजयाज्ज्वलनम् ॥ ४० ॥

नाभिनिकटस्थाग्निव्यापिनः समानस्य जयात् संयमेन वशीकरणाद् अग्नेर्ज्वलनं दीप्तिर्भवतीत्यर्थः । समानेनाविष्टो वह्निर्मन्दस्तिष्ठति समानजये तु निरावृतः सन् प्रदीप्तो भवतीति तत्तेजसा योगी ज्वलन्निव प्रतिभाति इति यावत् ॥ ४० ॥

संयमान्तरस्य सिद्धिमाह—

श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥

उपलक्षणमेतच्चक्षुस्तेज प्रभृतीनामपि ज्ञेयम् । तथाच तयोस्तयोः संबन्धेष्वाश्रयाश्रयिभावादिलक्षणेषु संयमादुक्तप्रकाराद्दिव्यातीन्द्रीयाणि दिव्यशब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वगक्षिरसनघ्राणाख्यानि भवन्ति यैर्योगी यथेष्टं व्यवहरतीत्यर्थः ॥ ४१ ॥

संयमान्तरस्य सिद्धिमाह—

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्ते-
श्चाकाशगमनम् ॥ ४२ ॥

कायः पाञ्चभौतिकः स्थूलदेहः । आकाशः शब्दतन्मात्रकार्यम् । तयोः सम्बन्धो व्याप्यव्यापकभावः । आकाशोऽवकाशप्रदातृत्वादि-हेतुर्व्यापकः । ततो न्यूनं शरीरम् । तच्च खद्योतकल्पं व्याप्यमिति तस्मिन् सम्बन्धे संयमात् कथितप्रकारात्, लघुतूलसमापत्तेश्च लघुतूलादिसमताभावनातश्च लघुत्वप्राप्त्या योगिन आकाशेगमनम् ऊर्णनाभेस्तन्तुजालेनेवादित्यरश्मिभिः स्वेच्छया यथेष्टं सञ्चारो भवतीत्यर्थः ॥ ४२ ॥

संयमान्तरस्य सिद्धिमाह—

बहिरकल्पिता वृत्तिर्महाविदेहा ततः
प्रकाशावरणक्षयः ॥ ४३ ॥

देहे साहङ्कारस्य शरीरसापेक्षा स्वशरीरस्यैव बहिर्वस्तूनां सङ्कल्पादिवशता विदेहा सिद्धिः कल्पितेत्युच्यते। या तु शरीरे निरहङ्कारस्य स्वशरीरनैरपेक्ष्येण परशरीरादावपि मनसो बहिर्वस्तूनां सङ्कल्पादिवशता सा महाविदेहाख्या सिद्धिरकल्पितेत्युच्यते। सेयं महाविदेहाख्या सिद्धिः । मनसो बहिरकल्पिता वृत्तिर्योगशास्त्रोक्तस्वगोचरसंयमाद्भवति। ततः शरीरे अहम्भावत्यागादिसंयमात् प्रकाशाऽऽवरणक्षयः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकरूपावरकं तस्य समूलस्य क्षयो भवतीत्यर्थः । तेषां क्षये च निरावरणं योगिनश्चित्तं स्वेच्छया विहरति विजानाति चेति भावः ॥ ४३ ॥

तदेवं, परिणामत्रयसंयमादित्यारभ्य भूतेन्द्रियाद्यात्मान्तरसंयमानां ज्ञानक्रियादिरूपाः सिद्धीः प्रदर्श्येदानीं, वितर्कादिसूत्रे स्वशास्त्रे मुख्यतः प्रकृतेषु ग्रहीतृग्रहणग्राह्येषु ये संयमास्तेषां सिद्धीः प्रतिपादयिष्यन् ग्रहीतृग्रहणयोर्ग्राह्यनिरूप्यत्वादादौ ग्राह्यसंयमस्य सिद्धिमाह—

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥४४॥

स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं च स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि। तेषु संयमात्साक्षात्कारपर्यन्तात् तत्तद्रूपवतां पञ्चभूतानां जयो वशवर्तिता भवतीत्यर्थः। तत्र स्थूलं परिदृश्यमानमवयवसंस्थानं, स्वरूपं काठिन्यसांसिद्धिकद्रवत्वोष्णत्वतिर्यग्गमनाऽवकाशदानादि, सूक्ष्मं शान्तघोरमूढवृत्तिशून्यत्वाच्छब्दस्पर्शरूपरसगन्धतन्मात्ररूपं कारणम्। अन्वयः प्रकाशक्रियास्थितिरूपेणान्वेतीत्यन्वयः सत्त्वादिगुणत्रयम्, अर्थवत्त्वं भोगापवर्गार्थता। एतेषु भूतानां पञ्चरूपेषु क्रमेण प्रतिरूपं संयमाद् भूतानि भूतप्रकृतयश्च योगिसंकल्पानुसारिण्यो भवन्ति वत्सानुसारिण्य इव गाव इति यावत् ॥ ४४ ॥

तस्यैव भूतजयस्य फलमाह—

ततोऽणिमादिप्रादुर्भावः कायसंपद्धर्मोऽनभिघातश्च ॥ ४५ ॥

ततो भूतजयादणिमादिप्रादुर्भावः।

अणिमा लघिमा चैव महिमा गरिमा तथा।

प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टमं स्मृतमित्येवमष्टविधैश्वर्यस्य प्राप्तिर्भवति। प्रादुर्भाव इत्यनेन सत्त्वप्रधानस्य चित्तस्य स्वरूपत एव तद्योग्यत्वात् संयमेनाभिव्यक्तिमात्रमिति ज्ञापितम्। अणिमा संकल्पमात्रेण तत्क्षणादेव प्रकृत्यपगमेन परमाणुवद्देहस्य सूक्ष्मता ॥ १ ॥ लघिमा गुरुतरस्यापि पर्वतादेस्तूलवल्लघुभावः ॥ २ ॥ महिमा आकाशादिवन्महद्भावः ॥ ३ ॥ गरिमा लघुतरस्यापि तूलादेः पर्वतादिवद् गुरुभावः ॥ ४ ॥ प्राप्तिः परिच्छिन्नभावस्यैव संकल्पमात्रेणावयवदैर्घ्याद्देशान्तरस्थवस्तुस्पर्शः। यथा अङ्गुल्यग्रेण चन्द्रादिवस्तुस्पर्शशक्तिः ॥ ५ ॥ एताः पञ्चसिद्धयः स्थूलसंयमस्य फलम्। स्वरूपस्य प्राकाम्यं, तच्चेच्छानभिघातः ॥ ६ ॥ सूक्ष्मस्य वशित्वम्। तच्च भूतभौतिकानां स्वाधीनकरणम् ॥ ७ ॥ अन्वयस्य ईशित्वं भूतानामुत्पत्तिविनाशयोः सस्थानविशेषे च सामर्थ्यम् ॥ ८ ॥ अर्थवत्त्वस्य यत्र कामावसायित्वं तच्च सत्यसंकल्पता प्राकाम्यमेव। नन्वेवं योगी कदाचिज्जलात्तेजः कुर्यात्। तथा चेश्वरस्य प्रतिपक्षः स्यादिति चेन्न। ईश्वरसंकल्पानुसारेणैव तत्संकल्पस्योत्पत्तेरित्यन्यत्र विस्तरः। एवं कायसम्पद्वक्ष्यमाणा भवति ॥ तद्धर्मानभिघातश्च ॥ तद्धर्मैः पृथिव्यादिभूतधर्मै

काठिन्यादिभिरनभिघातोऽप्रतिबन्धश्च भवति।शिलादिष्वपि योगि-शरीरप्रवेशदर्शनादिति संक्षेपः ॥ ४५ ॥

कायसंपदमाह—

रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥

रूपं चक्षुःप्रियो गुणः, लावण्यं सर्वाङ्गसौन्दर्यम्, बलं वीर्यं वज्र-संहननत्वं वज्रस्येव निविडो दृढः संघातो यस्य वज्रस्येव संहननं प्रहारो यस्येति वा । तस्य भावो वज्रसंहननत्वं हनुमत्प्रभृतिषु प्रसिद्धम्। एतानि योगिनः कायसंपद्भवतीत्यर्थः ॥ ४६ ॥

ग्राह्यसंयमस्य सिद्धय उक्ताः। संप्रतिग्रहणसंयमस्य सिद्धि-माह—

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥

ग्रहणं च स्वरूपं चास्मिता चान्वयश्चार्थवत्त्वं च ग्रहणस्वरूपास्मि-तान्वयार्थवत्त्वानि । तेषु संयमात् कथितप्रकारात् साक्षात्कारपर्यन्ता-त्तद्रूपाणामिन्द्रियाणां जयो वशवर्त्तिता भवतीत्यर्थः। ग्रहणं किञ्चि-दिदमिति सामान्यतोऽमुक इति विशेषतश्चेन्द्रियाणां विषयाकारपरि-णामः। स्वरूपं प्रकाशत्वम् अस्मिताकारणीभूतसात्त्विकाहङ्कारानुग-मः। अन्वयार्थवत्त्वं पूर्ववत्। एतेष्विन्द्रियाणां पञ्चरूपेषु क्रमेण प्रति-रूपं संयमात् सर्वाणीन्द्रियाणि योगिसंकल्पानुसारीणि भवन्ती-ति यावत् ॥ ४७ ॥

ततः किं तत्राह—

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥

ततोऽस्मिन्निन्द्रियजये सति मनोजवित्वं कायस्य मनोवच्छीघ्र-तरो गतिलाभो विकरणभावो विकीर्णता स्वभावाद् व्यापिता स्थूल-देहसंपर्करहितानामिन्द्रियाणामभिप्रेतदेशादिषु प्रवृत्तिलाभ इति याव-त् ॥ प्रधानजयः ॥ भूतेन्द्रियादिकारणस्य साम्यावस्थोपलक्षितस्य गुणत्रयस्य जयः स्वेच्छया अनुविधानं भवतीत्यर्थः । तस्मिन् सति सर्वेषां जयोऽयत्नसिद्धः। अत एव सर्ववशित्वं शास्त्रेषु प्रधानजयशब्देन निर्दिश्यते। एताश्च तिस्रः सिद्धयोऽस्मिन् शास्त्रे मधुप्रतीकाद्यु-

च्यन्ते । तत्र कर्मेन्द्रियजयफलं मनोजवित्वम् । अन्यस्पाष्टव्यादीति संक्षेपः ॥ ४८ ॥

तदेवं ग्राह्यग्रहणसंयमयोः सिद्धिमुक्ता ग्रहीतृसंयमस्य सिद्धिमाह—

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥

सत्त्वाधिकयात्,सत्त्वं बुद्धि पुरुषस्तज्ज्ञोक्ता स्वामी चेतनः।तयोरन्यतायां भेदस्य ख्यातिः साक्षात्कारमात्रं प्रमाणस्य तथाभूतस्य साक्षात्कारपर्यन्तस्य संयमस्य सर्वभावाधिष्ठातृत्वं सर्वेषां परिणामिभावापन्नानां गुणादिघटान्तानां भावानामधिष्ठातृत्वं स्वामिवदाक्रमण नियन्तृत्वं च सिद्ध्यति । तथा तेषामेव शान्तोदिताव्यपदेश्यधर्मत्वेन स्थितानां युगपद्यथार्थज्ञानवत्त्वरूपं सर्वज्ञातृत्वं च सिद्ध्यतीत्यर्थः। एषा विशोका नाम सिद्धिः ॥ ४९ ॥

एव संयमेन जातायाः ख्यातेः फलमाह—

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥

तस्यां विशोकाख्यायां सिद्धौ वैराग्यात् तद्धेतोः सालम्बने सामाधावपि यदा परं वैराग्यं, कृतं कृत्य, प्राप्तं प्राप्तव्यं,ज्ञातं ज्ञातव्यं, हात हातव्यमित्यव्यवस्थाफलकं भवति । तस्माद्दोषाणां रागादीनां यद् बीजमविद्या, तस्याः क्षये निःशेषतो नाशे सति कैवल्यम् आत्यन्तिकदुःखनिवृत्तिविशिष्टे स्वरूपे प्रतिष्ठत्वरूपं कैवल्यं भवति । इयं संस्कारदोषाख्या सिद्धिः ॥ ५० ॥

अथ कैवल्याख्यसिद्ध्यर्थिनो योगिनो यथोक्तवैराग्यवदेव साधनान्तरमाह ॥ अथवा सम्प्रति कैवल्यप्रसङ्गतः कैवल्यसाधने प्रवृत्तस्य योगिनस्तत्प्रत्यूहसम्भवे तन्निराकरणप्रकारमाह—

स्थान्युपमन्त्रणे सङ्गस्मयाकरणंपुनरनिष्टप्रसङ्गात् ॥ ५१॥

स्थानिनः स्वर्गादिलोकाधिकारिणो देवा इन्द्रादयस्तेषां स्वर्गलोकभोगार्थं योगिनो निमन्त्रणे सति तत्र सङ्ग प्रीतिः, स्मयश्च तादृशप्रार्थने सत्यपि आपाततस्त्यागेनात्मनि कृताभिमान सिद्धोऽहं

विरक्तोऽहं कोऽन्योऽस्ति मदृशो मयेत्यात्मादिस्मयः । तयोः सङ्गस्मययो-रकरणमुपायः । ननु सङ्गस्मये च का क्षतिरित्यत आह ॥ पुनरिति ॥ सङ्गस्मयाभ्यामहंकारगर्भाभ्यां पुनरेतच्छरीरोत्तरमप्यनिष्टप्रसङ्गात् संसारपाशरूपानर्थप्रसङ्गादित्यर्थः ॥

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ।

हत्वापि स इमांल्लोकान् न हन्ति न निबध्यते इति वदता भगवता निरस्ताहङ्कारस्यैव मोक्षप्रतिपादनेन साहङ्कारस्य पुनः पुनर्बन्ध एव ज्ञापितः ॥

अथात्र प्रथमकल्पिको मधुभूमिको प्रज्ञाज्योतिरतिक्रान्तभावनी-यश्चेति योगिनश्चत्वारः । एतेषु प्रथमस्य नोपमन्त्रणम् । अभ्यासि-मात्रत्वात् । तृतीयचतुर्थयोस्तु स्वयमीश्वरकल्पत्वादुपेक्षणीया एव ते भवन्ति । अतो मधुभूमिकस्यैव कृत्यप्रज्ञावतो द्वितीयस्यैव तद्भवति । तेन कैवल्यार्थिना वासनावर्धकेषु तेषु सङ्गः स्मयश्च न कार्यः । पुन-रपि संसारावरोहणरूपानिष्टप्रसङ्गादिति यावत् ॥ ५१ ॥

सर्वज्ञतासाधनं संयमान्तरमाह—

## क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम् ॥ ५२ ॥

क्षणः स्ववृत्तिधर्मसप्रतियोग्यनाधारः समयः । मुहूर्तादयस्तत्समूह-रूपत्वात् तदात्मका एव । तेषां क्रमोऽयमस्मात् पूर्वं क्षणोऽयमुत्तर इत्येवं पौर्वापर्यम् । तयोः संयमात् साक्षात्कारपर्यन्ताद् विवेकजं ज्ञानं विवेकेन इतरव्यावृत्ततयाजायमानं सर्ववस्तूनां ज्ञानम्भवती-त्यर्थः । सर्वं वस्तु प्रतिक्षणं परिणमत इति विकारितया क्षणरूपमे-व । पठन्ति च नैयायिका अपि, जन्यमात्र कालोपाधिरिति । जन्या-भिन्नं चास्मन्मते प्रधानान्तं कारणम् । कार्यकारणयोस्तादात्म्यसम्ब-न्धाङ्गीकारात् । अत क्षणक्रमयोः संयमः कार्यकारणसर्वविषयक इति । तस्मात् साक्षात्कारपर्यन्तात् सर्वेषां वस्तूनां विवेकेन ज्ञानं भवतीति यावत् ॥ ५२ ॥

तस्य विवेकज्ञानस्यासङ्कीर्णमुदाहरणमाह—

## जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥

तुल्ययोरेकजात्येकलक्षणैकदेशावच्छिन्नयोर्जातिर्गोत्वमहिषत्वादिः। लक्षणं नीलपीतादि। देशः पूर्वपश्चिमादिः। एतैरन्यतानवच्छेदाद् भेदावधारणस्यासम्भवात्। ततः क्षणक्रमविवेकज्ञानात् प्रतिपत्तिर्निश्चयो भवतीत्यर्थः। एतच्च क्षणक्रमजन्यज्ञानस्यैकदेशोदाहरणम्। क्षणक्रमज्ञानस्य तु ज्येष्ठकनिष्ठतादिविवेकज्ञानमुदाहरणं स्वयमूह्यम् ॥ ५३ ॥

विवेकज्ञानस्यैकदेशेनासङ्कीर्णोदाहरणं प्रदर्श्येदानीं सहेतुकां विवेकजज्ञानस्य मोक्षोपयोगितामाह—

तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥५४॥

इतिशब्दो हेत्वर्थे। यतो विवेकजं ज्ञानं सर्वविषयं व्यक्ताव्यक्ताः सर्वे पदार्था विषया यस्येति सर्वार्थगोचरम्। तच्च प्रमारूपं यतः सर्वथाविषयं यस्य। योऽवस्थाविशेषः परिणामविशेषादिश्च। तस्मिन् तत्सर्वप्रकारविषयम्। तच्च दिनपक्षमासाब्दयुगकल्पजन्मानेकभेदैर्योगिनः क्रमशः सर्वार्थगोचरज्ञानमिव न, किन्तु अक्रमं क्षणजन्मादिघटितपौर्वापर्यरूपक्रमशून्यं युगपदेवसर्वसमूहावलम्बनरूपम्। अतः सर्वत्र दोषसाक्षात्कारेणोक्तवैराग्यद्वारा संसारतारकं भवतीत्यर्थः ॥ ५४ ॥

ननु किमेतासां विभूतीनामनन्तरमेव मोक्षो ज्ञानेन भवति? आहोस्विदेतद्व्यतिरेकेणापीति। तत्राह—

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५५ ॥

सत्त्वपुरुषावुक्तलक्षणौ। तयोः शुद्धिसाम्ये सत्त्वस्य समाप्ताधिकारत्वेन सर्ववृत्तिराहित्यं शुद्धिः। पुरुषस्य तद्भोक्तृत्वादिराहित्यं शुद्धिरित्येवं समानाया शुद्धौ पुरुषस्य कैवल्यं मोक्षो भवति, न तत्र सिद्ध्यपेक्षेत्यर्थः ॥ ५५ ॥

इति श्रीनारायणतीर्थकृतायां योगसिद्धान्तचन्द्रिकायां तृतीयो विभूतिपादः ॥ ३ ॥

## कैवल्यपादश्चतुर्थः ॥ ४ ॥

पादद्वयेन समाधितत्साधनमिति विस्तरतः प्रतिपाद्य तत्फलविभवं तृतीयपादे प्रदर्श्य कैवल्येनोपसंहारः कृतः। तेन कैवल्यमेव परमपुरुषार्थं इति ज्ञापितम्। तच्च हेयतत्साधनहानरूपं स्वरूपतो द्वितीयपादे कथितमपि तस्याविशेषरूपो व्यूहो नोक्त इत्यतस्तत्प्रतिपादनाय चतुर्थपादारम्भः। तत्र कैवल्ययोग्य निर्धारयितुं पञ्चप्रकारां सिद्धिमाह—

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १॥**

जन्मना विशेषयोगेन यथा देवविशेषाणाम्। औषधिना दिव्यरसायनाद्यात्मकेन यथा माण्डव्यादीनाम्। मन्त्रेण शिवविष्णवादिमन्त्रजपेन। होमपूजादिसिद्धिस्तु मन्त्रप्रधानत्वान्मन्त्रान्तर्गतैव। यथा वत्सराजनन्दीश्वरप्रभृतीनाम्। तपसा अनशनशीतोष्णादिवाधासहनादिरूपेण। यथा विश्वामित्रादीनाम्। समाधिना आत्मविषयकभावनाविशेषरूपेण। यथा याज्ञवल्क्यदत्तात्रेयप्रभृतीनां सिद्धिरित्येता पञ्चसिद्धय। एता॰ सर्वा अपि पूर्वजन्मकृतसुकृतक्षपितकल्मषाणामेव लभ्या भवन्ति। एतासु चतसृषु विपर्यविशेषनिरसनदेहादिदार्ढ्यद्वारा समाधावुपयुक्ता, समाधिना तु कैवल्यमेव तेष्य उत्कृष्ट। तस्मात् कैवल्यार्थं समाधौ इह जन्मन्येव तदर्थमौषधादौ इह जन्मनि जन्मान्तरेऽपि वा तल्लाभाय मन्त्रतपआदौ सोत्साहानां विवेकिनां प्रयत्न आवश्यक इति भाव ॥ १ ॥

ननु सिद्धिस्तृतीयपादे वर्णिता अणिमादिप्रादुर्भावरूपा। तत्राऽणिमेहद्भाव। एव स एकधा भवति त्रिधा भवति पञ्चधा। शतञ्च दश चैकञ्च सहस्राणि च विंशतिरित्यादिश्रुतिसिद्धकामरूपतादशायां मनुष्यादिरूपेण परिणम्य स्थितानां देवतिर्यगादिजातिपरिणाम। एवम्महतोऽनुभावादिश्च कथम्। पूर्वपरिणामवति परिणामान्तरायोगात्। नानुपमृद्यप्रादुर्भाव इति न्यायेन पूर्वपरिणामनाशस्य हेतुत्वात्। न च तेषां सकल्पमात्रेण तत्सिद्धि। सयमस्य निमित्तमात्रत्वात्। तत्राह--

## जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

प्रधानादिपृथिव्याद्यन्ताः कार्येन्द्रियादिप्रकृतयः । तासाम् आपूरात् धर्माद्यनुरोधेन मनुष्यादिदेहाद्यवयवेषु अनुप्रवेशात् कामरूपतादशायां देवतिर्यगादिरूपजात्यन्तरपरिणामः, अणोर्महद्भावश्च भवति। एवं महतोऽणुभावः प्रकृत्यपगमादित्यपि बोध्यम् ॥ २ ॥

ननु तर्हि प्रकृत्यापूरः परमेश्वरस्य योगिनो वा संकल्पमपेक्षते, न वा? नचेदिच्छामात्रं प्रभोःसृष्टिरिति श्रुतीनां, स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिश्रुतीनाञ्च विरोधप्रसङ्गः । आद्ये प्रकृतिस्वातन्त्र्यहानिप्रसङ्गः । एवं धर्मादिनिमित्तानुरोधेन प्रकृत्यापूरेऽपि प्रकृतिस्वातन्त्र्यहानिः । नचेत् सर्वत्रापूरापत्तिरित्यत आह-

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

निमित्तं परमेश्वरयोगिसंकल्पधर्माधर्मादिरूपं सहकारि अप्रयोजकं प्रकृतीनामापूरे हेतुर्न भवति । कार्यस्य कारणप्रवर्त्तकत्वायोगात् । किञ्चाकाशे द्रव्याणामनारम्भिकाऽप्यनुक्षणमणूनां क्रिया सर्वसंमता नच तत्र धर्मादिकारणं कस्यापि भोगाहेतुत्वात् । नाऽपि तत्रेश्वरादिसंकल्पः कारणं गौरवात् । अतो निरन्तराणुक्रियाद्युपपत्तये लाघवेन गुणत्वेनैव सामान्यतः प्रवृत्तिकारणत्वात् प्रकृतिस्वातन्त्र्यं सिद्धम् । अपि च, कदाचिद्दण्डचक्रादिकं विनापि योगिसंकल्पादेव घटो जायते । आदिसर्गे चेश्वसंकल्पेनैव विनैव सर्वाणि बीजान्युत्पद्यन्ते इति परस्परव्यभिचारान्निमित्तानां न साक्षात्कारत्वसंभवः । तृणारणिमण्यादिषु चाग्निकारणत्वेऽन्योन्यव्यभिचारो लोकसिद्ध एवास्ति । अतः सहकार्यप्रयुक्ता प्रकृतिरेव परिणामे स्वतन्त्रेति सिद्धम् । नचैवं तर्हि कथं धर्मेश्वरयोगिसंकल्पादीनां प्रकृतिपरिणामहेतुत्वोक्तिः । तत्राह वरणेति ॥ ततो निमित्तविशेषात् कथितात् वरणस्यावरकस्य प्रकृतिप्रवृत्तिप्रतिबन्धकस्याधर्मादेर्भेदः क्षयो भवतीत्यर्थः । तथा प्रतिबन्धकोत्सादकत्वेनैव धर्मादेः परिणामे कारणत्वमुक्तमावः ॥

( एतावानेव ग्रन्थ उपलब्धः )

(७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र वि० सं० (मीमांसा) २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीत-
वेदान्तसूत्रस्य यतीन्द्र श्रीमद्विज्ञान-
भिक्षुकृत व्याख्यानम्। सम्पूर्णम्। (वेदान्त) ६

(९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता सम्पूर्णा। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपण-
परम्–श्रीभाष्यकृतां परमगुरुभिः श्री ६
श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टा-
रकाचार्यसंगृहीतः। आचार्यचित्सुख-
मुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णय न्यायानुसारिप्रथमादि-
सप्तविभक्तिविस्तृतविचाररूपः म० म०
श्रीगिरिधरोपाध्यायरचितः। सम्पूर्णः (न्याय.) ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सं० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्ट-
सोमेश्वरविरचिता। (मीमांसा) १६

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता।
श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशा-
ऽध्यायार्थसंग्रहः) श्रीभट्टनारायणात्मज-
भट्टशङ्करविरचित.। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि–मीमांसादर्शनम्) महामहो-
पाध्यायश्रीशालिकनाथमिश्रविरचितं, श्रीशङ्करभट्टकृतो मीमांसा-
सारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसार.। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीत-
स्वकृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्का-
चार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितम् (वेदान्त) १

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् (आनन्दपूर्ण-
विरचितया खण्डनफक्किकाविभजनाख्यया व्या-
ख्यया (विद्यासागरी) ति प्रसिद्धया समेतम्। (वेदान्त.) १३

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता। १

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्यया-
ऽवतरणिकया च सहितम्। ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीमद्व्रजनाथभट्टकृता ( वेदान्त )

(२५) कोडपत्रसंग्रहः । अत्र श्रीमत्कालीशङ्करसिद्धान्तवागीशविर- चितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानु- मानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्द- शक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च कोडपत्राणि । ( न्यायः ) १

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीमत्सुन्दरभट्टरचितसिद्धान्तसेतुका- ऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिक- जैमिनीयदर्शन संक्षेपः । मणिभद्रकृतटीकया सहितः । हरि- भद्रसूरिकृतः । १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या- जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा संस्कारप्रकाशात्मकः । ८

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः । ६

(३२) स्मृतिसारोद्धारः विठ्ठलविश्वम्भरत्रिपाठिसंकलितः । ३

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजी महाराजविरचितः २

(३५) वेदान्तपारिजातसौरभं नाम मीमांसाभाष्यं श्रीनिम्बार्का- चार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्य-नारायणतीर्थ- विरचित-योगसिद्धान्तचन्द्रिका-समाख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्द सरस्वती स्वामिकृत ब्रह्मामृतवर्षिणी समाख्य व्याख्या- संवलितम् । ४

पत्रादिप्रेषणस्थानम् } हरिदास गुप्तः, चौखम्बा, बनारस सिटी.